॥ श्रीः ॥

# ॥ पाणिनितन्त्रक्रोडपत्राणि ॥

प्राचीनैर्नवीनैश्च विद्वद्भिर्विरचितानि

' अभिनवभट्टबाणशब्दतर्कालंकारविद्याभूषण '

बिरुदभाजा वात्स्यचक्रवर्तिना

रायम्पेट्टै



कृष्णमाचार्येण



संपाद्य संशोध्य

तञ्जानगरस्थ

श्री कृष्णविलासमुद्रालये

मुद्रयित्वा प्रकाशितानि ॥

१९०[illegible]





मूल्यम् एका रूपिका.



## ॥ उपोद्घातः ॥

विदितमेवैतद्विदुषाम् , यदुत कोशपत्रसंपादनं महान् प्रयासः
ण्डितस्य । तन्नैतदसंभावितम्, यत् स्वायत्तमेकमेवादर्शमवलम्ब्य
द्रापणे प्रवृत्तस्य मे सत्यपि यावच्छास्त्रपरिश्रमं बहुशः संशोधने
त्र तत्र स्युः स्खलितानीति । कोशपत्रप्रदानानुग्रहं साक्षात् लेख-
श्च प्रार्थिता अपि बहव उचितोत्तरदानेनापि न समभावयन्निति
थं वा वर्ण्यतां तेषां मुष्टिबन्धविलसितम् । न जानीमः कियदेते
स्य लोकस्य चोपकरिष्यन्ति तैरन्तर्गृहमतिगूढमभिरक्षितैः कालता
गगणजर्जरैः कोशपत्रैः ? एवं प्रयात्यपि पण्डितलोके, श्रीमन्तः
श्रीनिवासाचार्याः परं कतिचन कोशपत्राणि संवादाय सदयम-
रेति सुबहु धार्यते तेभ्यः । मुद्रितपत्रशोधनतत्तदवसरोचितपरि-
ारप्रबोधनादिभिः सुबहु उपकृतवतां श्रीसुब्रह्मण्यशास्त्रिणां
कुप्पुस्वामिशास्त्रिणाम्, सश्रद्धं सप्रेम च समीचीनं संमुद्र्य साह्य-
चरितवतः श्रीकृष्णविलासमुद्राशालाध्यक्षस्य च अनर्घमुपकारं
कदाचिदपि विस्मर्तुं प्रभवामः ।

इति

**रायम्पेट्टै चक्रवर्ति कृष्णमाचार्यः ।**

मुनित्रयमन्दिरम् ।
त्रिचिनापल्लि
सौम्याश्विनकृष्णसप्तमी

॥ श्रीः ॥

# श्रीमते हयवदनपरब्रह्मणे नमः ॥

# रप्रत्याहारमण्डनम् ॥

संचिन्त्य वादिप्रवरं जेतारं श्रीपतञ्जलिम् ।
कुर्वे वादिविलासार्थं रप्रत्याहारमण्डनम् ॥

**लण्** । अत्र लकारादकारोऽनुनासिकः प्रतिज्ञायते; तेन सहोच्चार्यमाणो रेफो रलयोः संज्ञेति सिद्धमिति कैयटमाधवदीक्षितादयः। अत्र संज्ञाप्रकरणे शेखरे 'अकारश्च' इति प्रतीकमुपादाय, 'परे तु' इत्यादिना 'आहुः' इत्यन्तेन रप्रत्याहारखण्डनं कृतम्; तच्चिन्त्यम्, कैयटाद्याशयानवबोधात् । तथा हि—

'रदाभ्याम्—' 'रोऽसुपि' 'वनो र च' इत्यादौ प्रत्याहारग्रहणाभावाय प्रत्याहारस्य क्वाचित्कत्वज्ञापनार्थतया 'अतो ल्रान्तस्य' इति सूत्रे लकारोच्चारणस्य चारितार्थ्यात् । न च तत्रत्याकारस्योच्चारणार्थत्वेन 'उरण्रपरः' इत्यत्रेव अनुनासिकत्वाभावादेव प्रत्याहारग्रहणं न भविष्यतीति वाच्यम्, अनुवाद्यविषये तस्य तत्त्वाभावेऽपि विधेयविषये तस्य तत्त्वमस्त्येवेति 'तस्य लोपः' इति सूत्रे विवरणे स्पष्टमुपपादितत्वात् । ननु संध्यनन्तर्भूतश्रूयमाणे तस्मिन्पाणिनिकृतानुनासिकत्वप्रतिज्ञायाः केनाप्यदृष्टत्वात्कथं तन्निर्णय इति चेत्, तर्हि 'अतो ल्रान्तस्य' इति सूत्रेऽप्येवं वक्तुं शक्यमिति 'अतो ल्रिति सूत्रे पाणिनिर्लकारं नोच्चारयेत्' इति दूषणस्य मूर्ख

प्रलपितत्वापत्तिः। तस्मादनुनासिकत्वमस्त्येव। न चैवमपि तत्र प्रत्याहारग्रहणे फलाभावादेव न भविष्यतीति वाच्यम्, सोपसर्गात्फलधातोः 'अनुपसर्गात्—' इति लविधौ पर्युदासात् निष्ठायाः 'आदितश्च' इति इडभावे प्रफुल्त इत्यत्र निष्ठातकारादेशनकाररूपफलस्य, अहरहरित्यत्र पक्षे लकाररूपफलस्य च वक्तुं शक्यत्वात्। यदि तु व्याख्यानादिनैव तत्र प्रत्याहारग्रहणं न भविष्यतीति तज्ज्ञापनार्थं तत्र लकारो व्यर्थ एवेत्युच्यते, तर्हि अपरमिदं लाघवमिति इष्टापत्तिः। अपरत्र लग्रहणेनैव तल्लकारसार्थक्योपपादनं त्वनुचितमेव, अधिकार्धमात्रागौरवप्रसङ्गात्। अर्धमात्रालाघवार्थं हि भगवतः पाणिनेस्तथा न्यासः। तादृशार्धमात्रालाघवस्याविवक्षितत्वे ह्युभयत्र रणप्रत्याहारेणैव व्यवहरेत्। नन्वेवं सति तत्र लकारं नोच्चारयेदिति चेत्, न; वैचित्र्यार्थं तस्योच्चारणमित्यस्यापि वक्तुं शक्यत्वात्। तद्बलेन रप्रत्याहाराभावरूपफलकल्पनाभिनिवेशस्तु न युक्तः, भाष्यानुक्तेः नाम्रेडितसूत्रस्थस्वग्रन्थरीतिवदिति दिक्।

किंच यणघटितसूत्रेषु प्रत्याहारेण व्यवहारे 'इग्यणः—' 'इणो यण्' 'उदात्तस्वरितयोर्यणः—' इत्यादौ लाघवाभावः, विसर्गस्य वा णकारस्य वा पाठेन मात्रासाम्यात्। 'इको यणचि' इत्यादावनेकसंध्यक्षरणरूपप्रक्रियाद्यभस्तु यणघटितसूत्रवादिनामिव। यकारघटितसूत्रवादिमते तु पदलाघवगौरवाभावः। कुत्रचिदर्धमात्रालाघवसत्त्वेऽपि प्रत्याहारघटितसूत्राणाम्, 'जातेरस्त्रीविषयादयोपधात्' 'ङ्यः' 'योऽचि' इत्यादीनां च विषयविभागार्थं यणत्वेनैव व्यवहारस्य वक्तव्यतया तादृशलाघवस्याकिंचित्करत्वाच्च। न च तत्रापि प्रत्याहारग्रहणे को दोष इति वाच्यम्, महाशूद्रीत्यादौ योपधत्वात्

ङीपभावप्रसङ्गात् । 'ङ्यः' इत्यत्र पर्यायेण यकाराद्यादेशचतुष्टये सति रामायेत्यादौ ग्वाद्यन्तानिष्टरूपचतुष्टयप्रसङ्गात्, इष्टरूपासिद्धिप्रसङ्गाच्च । '

किंच 'यणो मयः—' इति वार्तिके विनिगमनाविरहमूलकव्याख्यानमूलकविकल्पानापत्तिः, तेन पञ्चम्यन्तपञ्चम्यन्तान्यतरपाठे विनिगमनाविरहस्यैवाभावात् । किंच तुल्यास्यसूत्रस्थभाष्यप्रामाण्येन अगत्या अनन्त्येनापि इता रप्रत्याहारस्वीकारेऽपि अन्यत्र तेन प्रत्याहारस्वीकारस्यान्याय्यत्वम्; अन्यथा 'मादुपधयाः—' इत्यादावपि वप्रत्याहारापत्तिः । एतेन 'अस्यानुनासिकत्वे' इत्यादिः 'व्यवहरेत्' इत्यन्तो ग्रन्थः परास्त इति दिक् ।

किंच भाष्योक्ततृतीयहेतोरव्यापकत्वं भवतामपि दुष्परिहरम् । तथा हि—पूर्वमन्त्यानुबन्धलोपे ततः संज्ञा प्रवर्तत इत्युक्तेऽपि मध्येत्संज्ञकवत् अन्त्येत्संज्ञकस्याप्यभावात् 'आदिरन्त्येन—' इति सूत्रार्थानापत्तौ अजादिसंज्ञानामेवानापत्तिः, 'आदिरन्त्येन—' इति सूत्रवैयर्थ्यं च । यत्तु तद्वैयर्थ्यपरिहाराय इतेत्यस्य इत्सदृशेनेत्यर्थः । एवं च सूत्रेष्वित्संज्ञायामपि इगादिशब्देषु तदभावात्प्रत्याहारसिद्धिरिति, 'वैयाकरणे चित्स्वरस्तु न, तस्यैच्चकारसदृशत्वेऽपि तत्त्वाभावात्' इति च स्वयमूचुः तत्तु आपातरमणीयमेव, इतेत्यस्य इत्संदृशेनेत्यर्थकल्पने मानाभावात् । सर्वत्र इत्संज्ञासत्त्वेनासंभवाच्च । किंच इत्सदृशेनेत्यस्य इत्सदृशेन 'इको यण्—' इत्यादिसूत्रस्थककारादिना सह उच्चार्यमाण इकारादिर्मध्यगानां संज्ञेत्यर्थो वाच्यः । स च बाधितः, तत्सूत्रे मध्यगानामनुपलभ्यमानत्वात् । किंचैवम् 'एच्

इग्घ्रस्वादेशे' इत्यादौ गकारस्य अन्त्येत्सदृशत्वाभावेन प्रत्याहारग्रहणानापत्तिः । न च जश्त्वस्यासिद्धत्वेन ककारस्यैव सत्त्वेन न दोष इति वाच्यम्, 'आदिरन्त्येन—' इति सूत्रदृष्ट्या त्रिपाद्याः सिद्धत्वस्यावश्यवक्तव्यत्वेन असिद्धत्वस्य वक्तुमशक्यत्वात् । अन्यथा 'झलां जशोऽन्ते' इत्यादौ प्रत्याहारसिद्ध्यनापत्त्या तद्ग्रहणानापत्तेः। किंच 'इगादिशब्देषु तदभावात्' इत्यसंगतम्. सूत्रस्थेगादिशब्दान्त्येषु इत्संज्ञाप्रवृत्तेर्दुर्वारत्वात् । न च तत्र 'व्यवसितान्त्यग्रहणं कर्तव्यम्' इत्युक्तेः कथमत्र इत्संज्ञाप्रवृत्तिः । ते च धातुप्रातिपदिकप्रत्ययनिपातागमादेशा इति वाच्यम्, 'अइउण्' इत्यादिसूत्राणां क्रमबोधकत्वेनार्थवत्त्वात्प्रातिपदिकत्वेन तदन्तणकारादीनामित्संज्ञेति भवदुक्तरीतिवत् एषामपि स्वसंज्ञिबोधकत्वेन अर्थवत्त्वात्प्रातिपदिकत्वेन व्यवसितान्त्यत्वाक्षतेरित्संज्ञाप्रवृत्तिसत्त्वात् । नन्वेवमपि 'प्रातिपदिकानां प्रतिषेधो वाच्योऽकृत्तद्धितान्तानाम्' इति प्रतिषेधान्नेत्संज्ञाप्रवृत्तिरिति चेत्, न; तस्य 'फलाभावान्नेत्संज्ञा' इत्यादिना प्रत्याख्यानात् । अत एव णादीनामित्संज्ञासिद्धिः, अत्र च प्रत्याहारसिद्धिरूपफलस्य जागरूकत्वात् । ननु तेषामपीत्संज्ञाङ्गीकारे लोपापत्तिरिति चेत्, न; 'आदिरन्त्येन—' इत्येतत्सूत्रवैयर्थ्यापत्तेः, उच्चारणसामर्थ्याद्भवन्मतेऽपि सूत्रेषु कादिषु लोपप्रसक्तेरसत्त्वाच्च । वैयाकरणे चित्त्वरस्तु न, प्रत्याहारसिद्ध्यर्थमुपात्तानुबन्धस्य तदवयवाननुबन्धत्वात् । अत्र च ज्ञापकम् 'तस्थपाम्' इति सूत्रयितव्ये 'तस्थस्थमिपाम्' इति गुरुन्यासकरणम् । अत एव महिङो ङकारस्य न तदनुबन्धत्वम्। तत्त्वे हि पप्रच्छिमहे इत्यादौ संप्रसारणादि स्यात् । स्पष्टं चेदं 'तिप्तस्झि—' इत्यत्र भवद्भिरेवाभिहितम् । एतेन 'वैयाकरणे' इत्यादिः

'तत्वाभावात्' इत्यन्तः परास्तः ।

किंच इतेत्यस्य इत्संज्ञकेनेत्येवार्थो युक्तः, लक्षणायां गौरवाच्चेति दिक् । तस्मात् 'आदिरन्त्येन—' इत्येतत्सूत्रवैयर्थ्यापत्त्या 'लोपश्च बलवत्तरः' इत्येतत् अन्त्येत्संज्ञातिरिक्तेत्संज्ञकपरमवश्यमभ्युपेयम् । स्पष्टं चेदमभिहितं बृहच्छब्दरत्नकारैः । एवं च तस्याव्यापकत्वं स्पष्टमेव । दधि णकारीयतीत्यत्र अनन्त्यविषय एवानेन शङ्का कृतेत्याशयेन 'लोपश्च' इति हेतूपन्यासाच्च । अत एव अन्त्यानन्त्यादिसाधारणम् 'आचारात्' इत्येतत्समाधानान्तरमुक्तम् । अत एव तन्मूलकम् 'अनुनासिक इत्यादिनिर्देशात्' इत्येव समाधानान्तरमुक्तम् । 'अप्रधानत्वात्' इत्येतद्धेत्वन्तरं तु लक्ष्यैकचक्षुष्कदृष्ट्या, न तु लक्षणैकचक्षुष्कदृष्ट्या, प्रत्याहारग्रहणार्थमुपन्यस्तोऽयम्, नेति विषयविभागस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वात् । तस्मात् 'आचारात्' इत्येव हेतुर्मुख्यः, हेत्वन्तराणामव्यापकत्वेऽपि अभ्युच्चयवशादेवोपन्यासात् 'अथ वा ऊकाल इति योगविभागः करिष्यते' इत्यनन्तरोक्तहेतूपन्यासवत् । अत एव सर्वान् हेतूनुपन्यस्य 'एवमपि कुक्कुट इत्यत्रापि' इत्यन्तहेतुदूषकवाक्ये 'एवमपि' इत्यत्र अपिशब्दः प्रयुक्तः । तेन हि पूर्वोक्तहेतुद्वये अव्यापकत्वादिरूपदूषणान्तरमस्त्येवेति ध्वनितम् । अग्रे च 'तस्मात्पूर्वोक्त एव परिहारः' इत्युपसंहृतम् । अत्र च 'पूर्वोक्त एव' इत्येकवचनस्वारस्येन पूर्वपदस्वारस्येन च 'आचारात्' इत्यस्यैव सार्वत्रिकत्वम्, अन्ये च एवकारव्यवच्छेद्या इति च सूचितम् । अत एव हेतुचतुष्टयोपन्यासस्वारस्यम्, उत्तरोत्तरोपमर्देन पूर्वपूर्वोपन्यासात् । न च पूर्वपूर्वोपमर्देन हेतूपन्यासो दृष्टः

न तूत्तरोत्तरोपमर्देन क्वापि दृष्ट इति वाच्यम्, 'तस्मात्स एवास्तु मध्यमः पक्षः' 'तस्मात्स एव परिहारः' इत्यादिना 'ईदूदेत्—' इत्यादिषु भाष्ये बहुशो दृष्टत्वात्। एवं च तस्याव्यापकत्वमस्तु। अथ वा तस्यापि व्यापकत्वमेव, हल्प्रत्याहारसिद्धेः प्रागच्पदार्थनिष्पत्त्यभावेन 'उपदेशेऽच्' इत्यस्य वाक्यार्थाभावेऽपि हल्प्रत्याहारसिद्ध्युत्तरमच्पदार्थनिष्पत्तौ सत्याम् 'उपदेशे' इत्यस्य वाक्यार्थोत्तरम् 'लण्' इत्यकारस्येत्संज्ञालोपयोः प्रवृत्तौ बाधकाभावात्। नहि 'लोपश्च बलवत्तरः' इत्यत्र प्रत्याहारसिद्धेः प्रागेव लोपप्राप्तिरपेक्षिता, नतूत्तरमित्यत्र राजाज्ञास्ति। न हि तादृशनियमे युक्तिरस्ति, उभयथा बलवत्त्वस्याक्षतेः 'संधिस्तु न प्रवर्तते, वर्णोपदेशकाले अजादिसंज्ञानामनिष्पादात्' इति 'अइउण्' इतिसूत्रस्थं कैयटमनूद्य वर्णोपदेशे इत्संज्ञायां प्रत्याहारे च निष्पन्ने प्रवर्तमानानां गुणादीनां सुध्युपास्य इत्यादौ तटस्थ इवोद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशेऽपि प्रवृत्तेर्दुर्वारत्वात्, अन्यथा 'तुल्यास्य—' इत्यादौ सवर्णदीर्घादिर्न स्यादिति भवदुक्तरीतिवत्। तथा च लण्सूत्रस्थाकारस्य हल्प्रत्याहारप्रवेशेऽपि हल्प्रदेशेषूपस्थितेः पूर्वं प्रतिबन्धकाभावेन तल्लोपे अनन्तरमुपस्थितौ अच्प्रदेशेषु लुप्तत्वात् णाद्यग्रहणवत् हल्प्रदेशेषु तदग्रहणं सूपपादमेव। एतेन लण्सूत्रस्थाकारस्य हल्प्रत्याहारे प्रवेश इत्यभिधाय महता प्रयासेनोपन्यस्तः 'मामोस्त्रायस्व' इत्यादिदूषणाभासोऽपि निरस्तः। 'तस्य लोपः' इत्यादौ लोपाकरणेन, हलन्तत्वादेव एव विष्णुरित्यादौ सुलोपे सिद्धे पुनः 'एतत्तदोः—' इति सुलोपविधानेन अकारस्य कार्यान्तरसंपादनार्थं हल्प्रत्याहारे पाठेऽपि अस्य हल्त्वाभावज्ञापनाच्च। पूर्वम् 'जातिग्रहण—'

इत्यादेरभिहितत्वेन, सोऽस्तीति दूषणदानेन च 'अनुनासिकपक्षे' इत्यस्यानुपयोगाच्चेति दिक्।

'अच्प्रत्याहारे शङ्का कृता, न हल्प्रत्याहारे' इति तु साधकत्वेनोपन्यस्तं बाधकत्वे पर्यवस्यतीति 'एकं संधित्सोरपरं प्रच्यवते' इति न्यायानुगुणत्वादतिस्थवीयः, प्रत्युत शङ्काविषये शङ्काया अकरणे समाधानाकरणे च न्यूनतादोषस्य ब्रह्मणापि दुरुद्धरत्वात्। यत्तु तादृशन्यूनतापरिहाराय 'नच' इत्यादिना 'तद्विषयप्रयोगाणामनभिधानाच्च' इत्यूचुः; तत्तु आपातरमणीयमेव, 'न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति' इति 'उच्चैरुदात्तः' इति सूत्रस्थभाष्यात् हकारादीनामकारविरहेण उच्चारणस्य कर्तुमशक्यतया अकारोच्चारणस्य चारितार्थ्येन तस्य भवदुक्तार्थज्ञापकत्वासंभवात्। 'हकारादिषु' इति मूलस्य स्वयमपि तथैव व्याख्यानात्। संभवति सामान्यापेक्षज्ञापकत्वे अक्ष्वप्येवं वक्तुं शक्यतया अच्प्रत्याहारेऽपि भाष्यकृतप्रत्याहारेत्यादिशङ्काया अनुपयुक्तत्वेन गर्भस्रावात्। अनभिधानस्याक्ष्वप्येवं वक्तुं शक्यत्वात्। भवदुक्तव्याख्याने न्यूनतारूपो दोषो दुष्परिहर एव। तस्य परिहाराय 'प्रत्याहारेऽनुबन्धानाम्' इत्यत्र अज्ग्रहणं प्रत्याहारमात्रोपलक्षणमिति व्याख्यायते, भवद्भिरप्युगाद्यर्थं तस्योपलक्षणतया व्याख्येयत्वात्। यत्तु 'अणगादिप्रत्याहारेषु तेषां ग्रहणे फलाभावं मनसि निधाय अज्ग्रहणेनेत्युक्तम्' इति व्याचख्युः; तच्चिन्त्यम्, विकल्पासहत्वात्। तथा हि—फलाभाव इत्यस्य किं यथाकथंचित्फलाभावः, उताभिमतफलाभाव इत्यर्थो विवक्षितः? नाद्यः, उगादिप्रत्याहारे णकारग्रहणे भणितो रणित इत्यादौ

'श्युकः किति' इति इण्निषेधात् रूपभेदस्य वक्तुं शक्यत्वात् । न द्वितीयः, अभिमतफलसत्त्वे दूषयितुमशक्यत्वात्, अच्प्रत्याहारेऽप्यभिमतफलाभावेन तत्राप्याशङ्काया निर्बीजत्वात् । तस्मादज्ग्रहणमुपलक्षणमेव । यत्तु 'अइउण्' इत्यादिसूत्रचतुष्टयोपादानेनैवास्य प्रवृत्तिर्दर्शितेत्यतस्तद्विषयैवेयं शङ्केत्यूचुः; तदतिस्थूलम्, तथा सति 'अइउण्' इति सूत्रव्याख्यावसरे 'प्रत्याहार—' इति वार्तिकोपन्यासः कृतः स्यात् । हयवरट्सूत्रं व्याख्याय सूत्रचतुष्टयमुपन्यस्य तु शङ्का कृता । तेन हलच्प्रत्याहारसाधारणीयं शङ्का प्रसङ्गादत्रोपन्यस्तेति ध्वनितम् । सूत्रचतुष्टयस्यैव विवक्षितत्वे तु हयवरट्सूत्रे तदुपन्यासस्य निर्बीजत्वप्रसङ्गो दुरुद्धर एव । अत एव कैयटादिभिरपि हलच्प्रत्याहारसाधरण्येनैव तद्भाष्यं व्याख्यातम्; तुल्यास्यसूत्रस्थं 'लपरत्वं वक्ष्यामि' इति भाष्यं व्याख्यास्यामीत्येवंपरतयैव व्याख्यातम्। वक्ष्यामीत्यस्य व्याख्यास्यामीत्यर्थकत्वं न क्वापि दृष्टमिति तु न शङ्क्यम्, 'द्विर्वचननिमित्ते अचि अजादेशः स्थानिवदिति वक्ष्यामि' इति 'द्विर्वचनेऽचि' इति सूत्रस्थभाष्ये तस्य तदर्थकत्वस्य क्लृप्तत्वात् । यत्तु 'उरण्रपरः' इत्यत्र लग्रहणं कर्तव्यमेवेति व्याचख्युः; तन्न, तथा सति 'उरण्रपरः' इत्यत्रैव अनुक्तदुरुक्तचिन्तकेन वार्तिककृता 'लपर इति वक्तव्यम्' इति वार्तिकं कृतं स्यात् । भाष्यकृता च त्वयात्र वार्तिकं न कृतमित्युपालम्भः कृतः स्यात् तस्मात्तत्र कैयटाद्युक्तं व्याख्यास्यामीत्येवं व्याख्यानमेव युक्तम् विधिप्रत्ययस्य तव्यादेरभावाच्च । नन्वेवमपि अनेकसूत्रेषु लाघवेन व्यवहारार्थं प्रत्याहारस्वीकारः । अस्य त्वनेकेषु व्यवहाराभावात्कथं स्वीकारः । किं च त्र्यवराणां वर्णानां बोधनाय प्रत्याहारो न क्वा[illegible]

दृष्ट इति वाच्यम्, 'नश्छव्यप्रशान्' इत्यादौ तदभावेऽपि स्वीकारात् एङादिषु दृष्टत्वाच्च ।

ननेवमपि प्रत्याहारस्वीकारे क्वाचित्कत्वस्वीकारे चातिगौरवम्। अस्माकं तु लपरत्वमात्रं वक्तव्यमिति वाच्यम्. 'यणः प्रतिषेधो वाच्यः' इत्यादिवार्तिकं 'न वा झलः—' इत्यादिप्रकारैर्गुरुभूतैः प्रत्याचक्षाणैर्वार्तिककारादिभिरपूर्ववचनकल्पनापेक्षया गुरुभूतस्यापि प्रत्याख्यानस्य लघुत्वसूचनेन गौरवाभावात् । तस्मात्तस्यानुनासिकत्वं स्पष्टमेव । अत एव 'हकारादिष्वकार उच्चारणार्थः । लकाराद्-कारोऽनुनासिकः प्रतिज्ञायते । तेनोरण्रपर इत्यत्र प्रत्याहारग्रहणं भवति' इति काशिकायां स्पष्टमेवाभिहितम् । तथैव हरदत्तेनेति दिक् । एतेन 'वस्तुतो रप्रत्याहाराभावेन रपर इत्यस्य स्थाने लपर इति पठनीयमिति लपरत्वं वक्ष्यामीति तुल्यास्यसूत्रभाष्याल्लभ्यते' इत्युरण्रपरसूत्रस्थशेखरः परास्तः । एवं भाष्यादिसर्वग्रन्थस्वारस्ये दृढ-दूषकयुक्तेरभावे च कथमेतद्दूषयांचक्रुरिति त एव प्रष्टव्या इति मात्सर्यमुत्सार्य विभाव्यं विद्वद्भिरित्यलम् ।

इति नानापाठकपुत्ररामचन्द्रपाठककृतं रप्रत्याहारमण्डनं समाप्तम् ।



॥ श्रीः ॥

श्रीमत्कृष्णमहीन्द्रस्य सभायां व्याकृतौ कृतम् ।

तमिमं श्रीनिवासार्यः स्फुटं विलिखति स्वयम् ॥

## नलोपः प्रातिपदिकान्तस्य ।

अत्र 'पदस्य, पदात्' इति पूर्वस्मिन्पादे विद्यमानं पदस्येत्येतदनुवर्तते । 'न' इति, 'प्रातिपदिक' इति च लुप्तषष्ठीकं पदद्वयं तस्य विशेषणम् । 'येन विधिः—' इति तदन्तविधिः । ततश्च नकारान्तस्य प्रातिपदिकसंज्ञकस्य पदस्य लोपः स्यादिति तदर्थः । अत्र अन्तग्रहणं शक्यमकर्तुम्, अलोऽन्त्यपरिभाषयैव पदान्तस्य नकारस्य लोपसिद्धेः । राजेत्याद्युदाहरणम् । अत्र 'प्रातिपदिकस्य' इत्युपादानात् अहन् अभूवन्नित्यादौ नलोपो नेति सिद्धान्तस्थितिः ।

अत्र प्रातिपदिकग्रहणं प्रत्याचिख्यासितमस्माभिः । 'नलोपोऽतिङः' इत्येव न्यासः कार्यः । अहन्नित्यादेः प्रत्ययलक्षणेन तिङन्ततया अतिङ इति न्यासेन तत्र नलोपवारणस्य सुशकत्वात् । प्रातिपदिकेत्येतदपेक्षया बहुतरलाघवसद्भावाच्च । अपरं च लाघवम् 'अर्थवदधातुः—' इति सूत्रे धातुपर्युदासाकरणरूपम्, तत्र धातोः प्रातिपदिकसंज्ञावारणद्वारा नलोपाभावस्यैव प्रयोजनतया भाष्यादावुदाहृतत्वादिति ।

अत्राशङ्कन्त — नलोपे कर्तव्ये प्रत्ययलक्षणेन तिङन्तत्वं संपादयितुं न शक्यम्, 'न ङिसंबुद्ध्योः' इति निषेधेन नलोपे कर्तव्ये प्रत्ययलक्षणेन तिङन्तत्वाभावस्य ज्ञापितत्वादिति ।

अत्रेत्थमुत्तरमवोचाम — सिद्धान्तरीत्या आर्द्रे चर्मन्, हे राजन्नित्यादौ प्रत्ययलक्षणेन प्रत्ययान्ततया प्रातिपदिकसंज्ञाया एवा-

भावेन अप्रसक्ते नलोपे तत्प्रतिषेधो निरालम्बनः सन्, प्रत्ययलक्षणेन प्रातिपदिकसंज्ञापर्युदासाभावमाक्षिपन्,' उक्तार्थं ज्ञापयितुं प्रभवति। 'अतिङः' इति न्यासे तु आर्द्रे चर्मन्नित्यादौ प्रसक्तस्य नलोपस्य वारणार्थमुक्तनिषेधस्यावश्यकतया मूलशैथिल्यादुक्तज्ञापकमसंभवदुक्तिकमेव। तस्मात् 'अतिङः' इति न्यासेऽपि नलोपवारणं सुसाधमिति।

अत्रावदन्—आस्तामेवम्। अथापि यस्मिन्नस्मिन्नित्यादौ नलोपः स्यात्, अतिङन्तत्वात्। सिद्धान्ते तु प्रातिपदिकत्वाभावान्नलोपो नेति।

तत्र पुनरित्थमवदाम—'ङसिङ्योः—' इति सूत्रेण ङः स्मिन्नादेशो विधीयते। यद्यत्र नलोपः स्यात्, तर्हि 'ङसिङ्योः स्मात्स्मी' इत्येव वदेत्, नकारोच्चारणस्य प्रयोजनान्तराभावात्। ततश्चानन्यार्थं नकारोच्चारणमेव नलोपाभावं ज्ञापयतीति।

तत्र परे पुनरकल्पयन्त—सत्यम्; यद्यनन्यार्थं नकारोच्चारणं भवेत्, तर्हि उक्तदोषो न स्यात्। शक्यते च तेनान्योऽर्थो लब्धुम्। तथा हि—अस्मिन्नित्यनुकरणशब्दात् 'तदस्यास्मिन्—' इति मतुपि कृते नलोपे च सति अस्मिमानिति सिद्धान्ते रूपं जायते। तच्च 'अतिङः' इति न्यासेऽप्यविशिष्टम्। 'ङसिङ्योः स्मात्स्मी' इति न्यासेऽप्यविशिष्टमेव। परं तु स्म्यादेशविधाने 'ह्रस्वनुड्भ्याम्—' इति मतुप्प्रत्ययस्य अन्तोदात्तत्वं स्यात्। स्मिन्नादेशविधाने तु मध्ये जातस्य नलोपस्य 'नलोपः सुप्—' इति असिद्धत्वावश्यंभावात् नकारेणावश्यं व्यवहिततया ह्रस्वात्परत्वाभावात् 'ह्रस्वनुड्-

भ्याम्—' इति सूत्रेणोदात्तत्वं नैव भवति । न च 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति वचनात्कथं नकारेण व्यवधानमिति शङ्क्यम्, तादृशपरिभाषायाः प्रकृते अप्रवृत्तेर्नुड्ग्रहणेनैव ज्ञापितत्वात्। तत्प्रवृत्तौ हि अक्षण्वता शीर्षण्वतेत्यादौ ह्रस्वात्परत्वादेव उदात्तत्वसिद्धौ नुड्ग्रहणं व्यर्थं स्यात् । 'हल्स्वरविधौ—' इति तदपवादभूतं परिभाषान्तरं च जागर्ति । अत एव मरुत्वानित्यादावुदात्तत्वं न भवतीति ।

अत्र पुनरवदाम—'अन्तोदात्तादुत्तरपदात्—' इति सूत्रादनुवृत्तमन्तोदात्तग्रहणम् 'ह्रस्वनुड्भ्याम्—' इत्यत्र ह्रस्वस्य विशेषणम् । तेन अग्निमान् वायुमानित्यादौ उदात्तात् ह्रस्वात्परस्य मतुप उदात्तत्वं भवति । न तु वसुमानित्यादौ, वसुशब्दस्याद्युदात्तत्वादिति सिद्धान्तस्थितिः । ततश्च अस्मिमानित्यत्र मतुप उदात्तत्वापादनं न संभवति, 'अनुदात्तौ सुप्पितौ' इति ङिप्रत्ययस्यानुदात्ततया तदादेशस्यापि तत्त्वावश्यंभावात् । ततश्च नकाराभावेऽपि अस्मिमानित्यत्र मतुप उदात्तत्वानापत्त्या तद्वारणरूपं प्रयोजनं नकारोच्चारणस्य दुर्निरूपमिति ।

अत्र परे पुनः प्रत्याहुः—'ऊडिदंपदादि—' इति सूत्रेण इदंशब्दात्परस्या असर्वनामविभक्तेरुदात्तत्वं विधीयते। ततश्च ङिप्रत्ययादेशस्य स्मिन्नित्यस्य उदात्तत्वमावश्यकमिति ततः परस्य मतुपः प्रसक्तमुदात्तत्वं नकरव्यवधानेनैव वारणीयमिति नकारोच्चारणस्य अनन्यार्थत्वं न संभवतीति ।

तत्र चेत्थं परिहारं व्याहराम— 'ऊडिदम्।' इति सूत्रेण

इदंशब्दात्परस्या असर्वनामस्थानविभक्तेरुदात्तत्वं विधीयते । तत्र च 'अभिव्यक्तपदार्था ये—' इति न्यायेन लोकप्रसिद्धार्थकस्य इदंशब्दस्य ग्रहणम् । तेन च साक्षादनुकरणस्थस्य स्मिन्नादेशस्य उदात्तत्वं नैव संभवति । किंतु 'प्रकृतिवदनुकरणम्' इति परिभाषया प्रकृतिवद्भावेन उदात्तत्वं संपाद्य, मतुप्प्रत्ययस्योदात्तत्वमापादनीयम्; तन्नायुक्तम्, अनित्यभूततादृशपरिभाषाप्रवर्तनेन उदात्तत्वं संपाद्य उपायान्तरेणानिष्टवारणापेक्षया अनित्यभूततादृशपरिभाषाप्रवृत्तिम-नभ्युपगम्य अनिष्टनिवारणस्यैव लाघवेनौचित्यात् । तस्याः परि-भाषाया अनित्यत्वं च 'यत्तदेतेभ्यः परिमाणे' इति सूत्रे त्यदाद्य-त्वकरणात् 'त्यदादीनि—' इत्येकशेषाकरणाच्च ज्ञापितमिति स्पष्ट-मेव । वस्तुतस्तु अस्मिमानित्यत्र नकारस्यैवाप्रसक्तौ, प्रसक्तस्य तस्य लोपाभ्युपगमे च मतुप्प्रत्ययस्य उदात्ततदभावरूपवैषम्य-सद्भावात्फलभेदे सति स्मिन्नादेशे नकारोच्चारणस्य उच्चारणार्थत्वं न संभवतीति यदुक्तम्, तदेव मूलशिथिलम् । तथा हि—नान्ता-देशविधानम्, नलोपस्य शास्त्रीयत्वं च यद्यभ्युपगम्येत, तर्हि अस्मिमानित्येतत् नलोपेन परिनिष्ठितस्य अस्मीत्यस्य साधुरूपस्यानु-करणशब्दात्केवलमस्मीत्यस्मात् मतुप्प्रत्यय इति विवक्षितम् । आहो-स्वित् अपरिनिष्ठितस्य अस्मिन्निति नान्तस्यासाधोरनुकरणरूपात् अस्मिन्निति रूपान्मतुप्प्रत्यय इति । नाद्यः, अनुकरणभूते अस्मि त्यत्र नकारस्यैव अप्रसक्ततया नलोपस्यासिद्धत्वान्नकारव्य-वधानादुदात्तत्वं न भवतीत्यस्य असंभवदुक्तिकत्वात् । न चानुकार्ये अस्मिन्नित्यत्र जातस्य नलोपस्य 'प्रकृतिवदनुकरणम्' इत्यनेन अनुकरणे अतिदेशात्तत्रोदात्तत्वापत्तिनिवारणं युक्तमेवेति शङ्क्यम्,

परिनिष्ठितस्य साधोरनुकरणमिति पक्षे 'अस्मि' इत्यस्यैवानुकार्यतया तस्मिन्नंशे अविद्यमानस्य नलोपस्य 'प्रकृतिवत्—' इत्यनेन कथंचिदप्यतिदेशासंभवात्। प्रकृत्युद्देशेन विहितं यच्छास्त्रीयम्, तदेव हि 'प्रकृतिवत्—' इत्यनेनातिदिश्यते। न चेदानीं प्रकृतिबहिर्भूतस्य नस्य जातो लोपः प्रकृत्युद्देशेन विहितः, येनात्रातिदिश्येत। ततश्च नकारानुच्चारणे अस्मिमानित्यत्र मतुपो यथोदात्तत्वं भवति, तथा तदुच्चारणेऽपीति न कश्चित्फलभेदः। नापि द्वितीयः, अस्मिन्नित्यसाधुरूपस्य यत्किंचिदुदासीननकारमेलनेन लोके प्रयुज्यमानस्य संभवात्, तदनुकरणभूतादस्मिन्नित्यस्मात् मतुपि उदात्तत्वाभाववत् अस्मिमानित्यस्य सुसाधत्वेन ङः स्म्यादेशविधानेऽपि तदसिद्धेरसंभवात्। नहि असाधोः 'अस्मिन्' इत्यस्यानुकार्यतासिद्ध्यर्थं नकार उच्चारणीय इत्येतत्संभवति। तस्मादसाध्वनुकरणेऽपि न फलभेदः। तस्मान्नकारोच्चारणस्यानन्यार्थतया यस्मिन्नित्यादौ 'नलोपोऽतिङः' इति न्यासेऽपि नलोपो नेत्यसाधयाम।

अत्र परे पुनः प्रत्याहुः—एवमपि रामानित्यादौ नलोपस्य प्रसक्त्या 'अतिङः' इति न्यासो न संभवतीति।

तदुपर्यस्माभिः—'तस्माच्छसो नः पुंसि' इति नत्वविधानस्यानन्यार्थतया नलोपो न भवतीत्यभाणि। तत्र विसर्गव्यावृत्त्यर्थमेव नविधानमित्यपि न संघटते, एवमपि लोपविधानादेव सिद्धौ तद्विधानस्यानन्यार्थताया दुर्वारत्वादिति चोक्तम्। न च न इत्यपेक्षया लोप इत्युक्ते गौरवम्, 'नलोपः प्रातिपदिकान्तस्य' इत्येतदपेक्षया 'नलोपोऽतिङः' इति न्यासे विशिष्य लाघवसत्त्वात्।

अत्र परे प्रत्याहुः—यदि नकारमविधाय लोपो विधीयेत, तर्हि यानानित्यत्र या आ इति रूपं न भविष्यति । स्याच्च तत्र सवर्णदीर्घः । ततश्च या इति स्यात् । नकारं विधाय तस्य लोपसंपादने तु नलोपस्यासिद्धतया नकारेण व्यवधानान्न भविष्यति । न च 'नलोपः सुप्स्वर—' इति नियमात्तस्य नासिद्धत्वमिति शङ्क्यम्, अत्र सवर्णदीर्घविधेरपि सुब्विधित्वात् । अ इति प्रातिपदिकाच्छसि पूर्वसवर्णदीर्घे एकादेशे कृते तस्य 'अन्तादिवच्च' इति परादिवद्भावेन सुप्त्वाश्रयणसंभवात् तन्निमित्तकसवर्णदीर्घविधेः सुब्विधित्वसंभवात् ।

अत्रेत्थमवदाम— 'तस्माच्छसो नुम्पुंसि' इति नुमागमो विधातुं शक्यते । तस्य मित्त्वात् शसकारात्परं नुमागमे कृते रामान्स् इति स्थिते संयोगान्तलोपे तस्यासिद्धत्वान्नलोपासंभवेन इष्टरूपसिद्धिः- तस्मात् 'नलोपोऽतिङः' इति, 'तस्माच्छसो नुम्पुंसि' इति च न्यासकरणान्न कश्चिद्दोष इति ।

अत्राशङ्कन्त—'तस्माच्छसो नुम्पुंसि' इति न्यासो न संभवति, राम अस् इत्यत्र पूर्वसवर्णदीर्घे कृते एकादेशभूतेन तेन शसोऽपहारात्सवर्णदीर्घात्परस्य शसोऽभावेनासंभवात् । अत एव हि 'तस्माच्छसः—' इत्यत्र शस इत्यवयवषष्ठीमाश्रित्य 'पूर्वसवर्णदीर्घात्परो यः शसः सकारः' इति व्याचख्युः । न त्वलोऽन्त्यपरिभाषया शसः सकारस्य नकारः । न च नुमागमविधाने तथा व्याख्यानं संभवति, अन्त्यादचः परतया भाव्यस्य नुमागमस्य केवलसकारागमत्वासंभवात् । तस्मात् यथान्यासरीत्या नकारादेश एव विधातव्यः । तस्य लोपेऽपि तद्विधानप्रयोजनं पूर्वोक्तरीत्या

या आ इत्यत्र सवर्णदीर्घवारणम् । ततश्च नकारोच्चारणस्यानन्यार्थत्वाभावेन रामानित्यादौ नलोपो दुर्वार एवेति ।

अत्रेत्थमब्रूम—राम अस् इत्यत्र पूर्वसवर्णदीर्घे कृतेऽपि शसस्तत्परत्वमुपपादयितुं शक्यते, 'अचः परस्मिन्—' इति सूत्रे पञ्चमीपक्षाश्रयेण स्थानीभूतप्रत्ययाकारस्य यो धर्मः पृथगवस्थितिरूपः, तस्याप्यतिदेशाभ्युपगमात् । पूर्वसवर्णदीर्घस्य निमित्तीभूतस्य स्थानीभूतस्य प्रकृत्यकारस्याचः स्थानीभूतप्रत्ययाकारात्पूर्वस्य नुम्विधिं प्रति निमित्ततया स्थानीभूतादचः पूर्वस्मान्निमित्तभूतादित्यस्यापि सुवचत्वादिति ।

इति श्रीश्रीनिवासाचार्यलिखितो नलोपसूत्रवादार्थः समाप्तः ।



॥श्रीः॥

## उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणप्रतिषेधः ।

उत्तरस्य पदत्वमित्येवं षष्ठीतत्पुरुषः । उत्तरशब्दश्च उत्तरपदपर्यायः, भीमो भीमसेन इतिवत् । स च रूढ्या समासचरमावयवार्थकः । एवं च समासचरमावयवस्य पदत्वे कर्तव्ये लुमता लुप्ते प्रत्ययलक्षणं नेत्यर्थः । अपदादिविधाविति प्रसज्यप्रतिषेधः, न पर्युदासः, पदत्वस्य पदादिविधिभिन्नत्वादव्यावर्तकत्वापत्तेः । विधिरिति कर्मणि किः । पदादेः कार्ये कर्तव्ये प्रत्ययलक्षणप्रतिषेधो नेत्यर्थः

तेन परमवाचौ, परमवाच इत्यत्र अन्तर्वर्तिनीं विभक्तिमाश्रित्य सुबन्तत्वे वाक्शब्दस्य पदसंज्ञायां प्राप्तायाम् उत्तरपदस्य चरमावयवीभूतवाक्शब्दस्य पदत्वे कर्तव्ये प्रत्ययलक्षणस्यानेन निषेधात् चकारस्य पदान्तत्वाभावेन 'चोः कुः' इति कुत्वाभावसिद्धिः। दधिसेचावित्यादौ 'सात्पदाद्योः' इति षत्वनिषेधस्य च पदादिविधित्वेन तस्मिन् कर्तव्ये निषेधाप्राप्त्या षत्वाभावसिद्धिः। अत्र पदादिविधिना प्रतिपदोक्तत्वात् 'सात्पदाद्योः' इत्येव गृह्यते। तेन परमबुधावित्यादौ भष्भावो न। अत्र भाष्ये एतद्वार्तिकफलानामन्यथासिद्धेरेतद्वार्तिकं न कर्तव्यमित्युक्त्वा, पुनर्नञ्द्वयाघटितैतद्वचनारम्भेण वार्तिकस्य कर्तव्यता ध्वनिता। तत्र किं प्रत्याख्यान एव भाष्यतात्पर्यम्, उत आरम्भ एवेति विशये प्रत्याख्यान एव भाष्यस्य तात्पर्यमिति प्रथमः पक्षः। आरम्भ एवेति द्वितीयः। तथा हि—इदं वार्तिकं नारम्भणीयम्। 'स्वादिष्वसर्वनामस्थाने' इत्यत्र स्वादिष्विति योगो विभज्यते। ततः, असर्वनामस्थाने यचीति द्वितीयं वाक्यम्। ततो भमिति तृतीयं वाक्यम्। यस्मात् स्वादिविधिः, तदादि शब्दस्वरूपं तस्मिन् स्वादौ परतः पूर्वं पदसंज्ञं भवतीति प्रथमसूत्रार्थः। तत्फलं तु राजभ्यामित्यादौ नलोपादिः। यजादौ सर्वनामस्थाने परतः पूर्वं पदसंज्ञं न भवतीति द्वितीयसूत्रार्थः। योगविभागात् बाध्यसामान्यचिन्ताश्रयणेन 'स्वादिषु' इति, 'सुप्तिङन्तम्—' इति च प्राप्तयोः पदसंज्ञयोरुभयोरपि निषेधकमिदम्। तेन परमवाचौ परमवाच इत्यादौ यजादिसर्वनामस्थानपरत्वात् पूर्वस्य पदत्वनिषेधेन कुत्वाद्यभावसिद्धिः। भमिति तृतीयवाक्ये स्वादिष्वसर्वनामस्थाने यचीति चानुवर्तते। 'सुप्तिङन्तं पदम्' इति

सूत्रात् सुबित्यनुवर्तते । सुबन्तमिति तस्यार्थः । यस्मात् यजाद्य-सर्वनामस्थानविधिः, तस्मिन्परतः पूर्वं भं भवति । तत्र यत्सुबन्तं तदपि भं भवतीति वाक्यार्थः । तेन परमवाच इत्यादौ शसादा-वुत्तरभागस्य भत्वान्न कुत्वादि । तत्र समुदायस्य संज्ञा प्रधानशिष्टा, अवयवस्यतु अन्वाचयशिष्टा । तेन राज्ञ इत्यादाववयवसुबन्ताभावे-ऽपि भसंज्ञा भवति । दधिसेचावित्यादौ तु पदात् आदिः पदादि-रिति पञ्चमीसमासस्य 'सात्पदाद्योः' इति सूत्रे आश्रयणात् षत्वनिषे-धश्च सिद्धः । न चैवं स्वादिष्विति पदत्वमाश्रित्य हरिष्वित्यादौ षत्वनिषेधापत्तिरिति वाच्यम्, सात्ग्रहणेन स्वादिष्विति यत् पदम्, तदुत्तरस्य षत्वनिषेधो नेत्यर्थज्ञापनात् । एवं च वार्तिकफलानामन्य-थासिद्धेर्वार्तिकमिदं नारम्भणीयमेव ।

इदं वार्तिकमावश्यकमेव, उक्तरीत्या प्रत्याख्यानस्यातीव गुरुत्वात् । तथा हि–तृतीयवाक्ये भिन्नावधिकतया भसंज्ञया अवयव-सुबन्तस्य पदत्ववारणार्थं 'सुप्तिङन्तम्' इति सूत्रात् सुबित्यस्यानु-वृत्तौ वाक्यभेदाङ्गीकारे गौरवम् । मण्डूकप्लुत्यापत्तिश्च । तथा द्वितीयवाक्येऽपि प्रत्ययग्रहणपरिभाषया तदादेरित्यस्योपस्थित्या तदादेः 'स्वादिषु—' इति प्राप्तपदसंज्ञानिषेधेऽपि अवयवस्य 'सुप्तिङन्तम्' इति प्राप्तपदसंज्ञानिषेधो दुर्वचः । तदर्थं तत्रापि सुबित्यस्यानुवृत्त्या वाक्यभेदेन अवयवसुबन्तस्यापि पदसंज्ञानिषेधे मण्डूकप्लुतिक्लेशवारणाय प्रथमवाक्येऽपि सुबित्यनुवृत्य वाक्यभेद-कल्पने निरर्थकवाक्यकल्पनाप्रयुक्तं गौरवमप्यतिरिच्यते । किंच सुगवतीत्यत्र उत्तरभागस्य पदत्वेन 'एङः पदान्तादति' इति पूर्व-

रूपापत्तिः । सति वार्तिके प्रत्ययलक्षणप्रतिषेधात् पदत्वाभावेन पूर्वरूपाभाव इति वार्तिकमारम्भणीयम् ।

परमवाचावित्यादिसिद्धये वार्तिकारम्भे बहुवाचावित्यादौ कुत्वाभावाय 'बहुच्पूर्वस्य न' इति वार्तिकमारम्भणीयम् । प्रत्याख्यानपक्षे तु उक्तरीत्या पदत्वाभावादेव कुत्वाद्यप्राप्तिरिति 'बहुच्पूर्वस्य न' इति, 'उत्तरपदत्वे च—' इति च नारम्भणीयम् । न च वाक्यत्रयकल्पनाप्रयुक्तगौरवम्; त्वन्मतेऽपि 'उत्तरपदत्वे च' इत्येकम्, 'अपदादिविधौ' इत्यपरम्, 'बहुच्पूर्वस्य न' इति तृतीयमित्यपूर्ववाक्यत्रयकल्पनस्यावश्यकतया अपूर्ववचनत्रयानारम्भप्रयुक्तलाघवस्य मन्मत एव सुवचत्वात् । किं च माषकुम्भवापेनेत्यादौ वार्तिकारम्भवादिमते कुम्भशब्दस्य पदत्वाभावेन माषकुम्भशब्दस्य वापेति कृदन्तेन समासात् वापेत्यस्य सुतरां पदत्वाभावेन 'पदव्यवायेऽपि, इति णत्वनिषेधानापत्तिः । मम तु कुम्भेत्यस्य पदत्वानपायात्तेन व्यवधानात् णत्वनिषेधः सिध्यति । यदुक्तम्—सुगवतीत्यादौ 'एङः पदान्तादति' इति पूर्वरूपापत्तिरिति, तन्न; 'न वै संध्यक्षरमन्त्यमस्ति' इति 'इको गुणवृद्धी' इति सूत्रस्थभाष्यप्रामाण्यात् एजन्तेभ्य आचारक्विपोऽनभिधानाददोषात् । तस्माद्वार्तिकं नारम्भणीयम् ।

यदुक्तम् — वार्तिकारम्भवादिमते अपूर्ववचनद्वयारम्भगौरवमधिकमिति, तन्न; बहुसेचावित्यत्र षत्वनिषेधसिद्धये प्रत्याख्यानवादिमते 'सात्पदाद्योः' इति सूत्रे 'बहुच्पूर्वस्य च' इति वार्तिकारम्भस्यावश्यकतया वाक्यद्वयात्मक उत्तरपदत्वे चेति वार्तिका-

रम्भापेक्षया योगविभागेन वाक्यपञ्चककल्पनस्यैव गुरुतरत्वात् । यदुक्तम्—माषकुम्भवापेनेत्यादौ णत्वनिषेधानापत्तिरिति, तन्न; उत्तरपदस्य पदत्वप्रयुक्तकार्यभाक्त्वं यत्र, तत्रैव प्रत्ययलक्षणप्रतिषेधाङ्गीकारेणादोषात् । किं च त्वन्मते महेन्द्रतीत्यादौ प्रत्ययलक्षणनिषेधाभावेन पदत्वादकारस्य पदान्तभिन्नत्वाभावेन 'अतो गुणे' इति पररूपानापत्तिः । तस्माद्वार्तिकारम्भ एव युक्तः ।

यदुक्तम्—'सात्पदाद्योः' इति सूत्रे 'बहुच्पूर्वस्य च' इति वचनारम्भस्तवाप्यावश्यक इति तवैव गौरवमिति, तन्न; बहुवाचावित्यादौ कुत्वव्यावृत्तये प्रत्ययलक्षणप्रतिषेधाय 'न लुमता—' इति सूत्रे 'बहुच्पूर्वस्य च' इत्येकम्, बहुसेचावित्यादौ षत्वनिषेधाय 'सात्पदाद्योः' इति सूत्रे 'बहुच्पूर्वस्य च' इत्यपरमिति त्वन्मते वार्तिकत्रयारम्भप्रयुक्तगौरवस्य दुर्वारत्वात् । यत्तु—माषकुम्भवापेनेत्यादौ दोषवारणाय उत्तरपदस्य यत्र कार्यित्वम्, तत्रैव प्रत्ययलक्षणप्रतिषेधः स्वीक्रियत इति, तन्न; तत्र कार्यित्वनिवेशे मानाभावेन उक्तदोषतादवस्थ्यात् । यत्तु—महेन्द्रतीत्यादौ पररूपानापत्तिरिति, तन्न; 'अतो गुणे' इत्यत्र 'उस्यपदान्तात्' इत्यतोऽनुवृत्तस्य अपदान्तपदस्य अपदस्य अन्तः अपदान्त इति विग्रहेण पदभिन्नसमुदायान्तादित्यर्थेन महेन्द्रतीत्यादौ उत्तरखण्डस्य पदत्वेऽपि समुदायस्य पदभिन्नत्वेन अकारस्य अपदान्ततया पररूपप्रवृत्त्या उक्तरूपसिद्धेः । किं च काश्यपेन प्रोक्तमित्यर्थे 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' इति णिनिप्रत्यये ततोऽधीत इत्यर्थे अणि तस्य 'प्रोक्ताल्लुक्' इति लुकि काश्यपिनावित्यादौ उत्तरपदत्वाभावात्पदत्वनिषे-



धानापत्त्या नलोपापत्तिः । मम तु पूर्वोक्तरीत्या द्वितीयवाक्येन पदत्वनिषेधान्न दोषः ।

यत्तु—बहुवाचावित्यादौ कुत्वाभावाय प्रत्ययलक्षणप्रतिषेधार्थम् 'उत्तरपदत्वे च—' इत्यनन्तरम् 'बहुच्पूर्वस्य' इत्येकम्, बहुसेचावित्यादौ षत्वनिषेधसिद्ध्यै 'सात्पदाद्योः' इति सूत्रे 'बहुच्पूर्वस्य च' इत्यपरमिति वचनद्वयारम्भे गौरवमिति, तन्मन्दम्; 'उत्तरपदत्वे च—' इत्यतः अपदादिविधावित्यस्य 'बहुच्पूर्वस्य च' इति समनन्तरवार्तिके अनुवृत्त्या पदादिविधौ तदप्रवृत्त्या षत्वनिषेधसिद्ध्या 'सात्पदाद्योः' इति सूत्रे षत्वनिषेधार्थकस्य 'बहुच्पूर्वस्य' इति वार्तिकस्यानावश्यकतया त्वदुक्तगौरवासंभवात् । यत्तु—'उत्तरपदत्वे च—' इति वार्तिके कार्यित्वनिवेशे मानाभावेन माषकुम्भवापेनेत्यादौ स दोषस्तदवस्थ इति, तन्न; वार्तिके अपदादिविधाविति पर्युदासः, लाघवात् । पदत्वे इत्यस्य पदसंज्ञाप्रयोज्यकार्ये लक्षणा । तथा च समासचरमावयवस्य पदादिसंबन्धिकार्यभिन्नं यत्कार्यं पदसंज्ञाप्रयोज्यम्, तस्मिन्कर्तव्य एव प्रत्ययलक्षणप्रतिषेधाङ्गीकारेण माषकुम्भवापेनेत्यादौ कुम्भपदे पदत्वप्रयोज्यकार्याभावेन निषेधाप्रवृत्त्या 'पदव्यवायेऽपि' इति प्रतिषेधप्रवृत्तेः सूपपादत्वात् । यत्तु—अपदस्य अन्तः अपदान्त इत्याश्रयणात्समुदायस्य पदभिन्नत्वेन महेन्द्रतीत्यादौ न दोष इति, तन्न; वाक्यस्यापि पदभिन्नत्वेन आगच्छ देवदत्तात्र स्नाहीत्यादौ आगच्छ देवदत्तेति वाक्यस्य अपदत्वेनाकारस्य पदभिन्नसमुदायान्तत्वेन पररूपापत्त्या तथोक्तेरयुक्तत्वात् । तथा च महेन्द्रतीत्यादौ दोषो

48082

दुर्वारः । यत्तु काश्यपिनावित्यादौ नलोपापत्तिरिति, तन्न; 'छगलिनो ढिनुक्' इत्यत्र नकारोच्चारणेन तद्धिताव्यवहितपूर्ववर्ति-सुब्विभक्तिमाश्रित्य पदत्वाभावज्ञापनेनादोषात् ।

यत्तु—'बहुच्पूर्वस्य च' इति वार्तिके अपदादिविधावित्य-नुवृत्त्या बहुसेचावित्यादौ षत्वनिषेधसिद्धेः 'सात्पदाद्योः' इति सूत्रे 'बहुच्पूर्वस्य' इति नारम्भणीयम् । प्रत्याख्याने तु 'सात्पदाद्योः' इति सूत्रे 'बहुच्पूर्वस्य' इति वार्तिकमारम्भणीयमिति न वार्तिकद्वयारम्भप्रयुक्तगौरवमिति, तन्न; मन्मते 'सात्पदाद्योः' इति सूत्रस्थाने प्रथमं 'सातेः' इति योगः क्रियते । सातेः सस्य षत्वं नेति तदर्थः । ततः 'बहुच्पदाभ्याम्' इति करणीयम् । आभ्यामुत्तरस्य सस्य षत्वं नेति तदर्थः । आदिग्रहणं च न कार्यम् । तदिदं बहुज्ग्रहणमादिग्रहणेन निमा-तव्यम् । एवं च 'बहुच्पूर्वस्य' इत्येकमपि वार्तिकं नारम्भणीयम् । त्वन्मते तु कुत्वषत्वाभावयोः सिद्धये 'बहुच्पूर्वस्य' इति वार्तिकम्, परमवाचौ दधिसेचावित्यादौ कुत्वाद्यभावसिद्धये 'उत्तरपदत्वे च—' इति वार्तिकमित्यपूर्ववार्तिकद्वयारम्भप्रयुक्तगौरवं दुर्वारमेव । यत्तु— 'उत्तरपदत्वे च—' इत्यत्र अपदादिविधाविति पर्युदासेन उत्तरपदस्य कार्यित्व एव प्रत्ययलक्षणप्रतिषेधप्रवृत्त्या माषकुम्भवापे-नेत्यादौ। न दोष इति, तन्न; तथा सति परमदण्डिनावित्यादौ उत्तरखण्डस्य पदत्वेन ङमुडागमापत्तेः । मम तु उत्तरखण्डस्य पदत्वाभावादचो ङमन्तपदात्परत्वाभावेन न दोषः । तथा च माष-कुम्भवापेनेत्यादौ स दोषस्तदवस्थ एव । यत्तु—अपदस्य अन्तः

अपदान्त इत्याश्रयणे आगच्छ देवदत्तात्र स्नाहीत्यादौ पररूपाप-त्तिरिति, तन्न; शकन्धुरित्यादौ ककारस्यापि पदभिन्नत्वेन पदभि-न्नसमुदायान्तत्वादकारस्य पररूपे सिद्धे शकन्ध्वादीनां पाठेन अप-दान्तादित्यनुवृत्तस्य पदे अन्तः पदान्तः न पदान्तः अपदान्त इत्येवं विग्रहकरणेन पदपरकचरमावयवभिन्नाकारात् गुणे परतः पररूपं भवतीत्यर्थाङ्गीकारेण वाक्ये आगच्छ देवदत्तेत्यादौ पदपरकचरमावयवाकारस्यैव सत्त्वेन पररूपाभावात् । महेन्द्रतीत्यादौ च पदपरकचरमावयवभिन्नत्वेनाकारस्य पररूपं भवति । न च दैत्यारी इत्यत्र प्रत्याख्यानभगरीत्या उत्तरखण्डस्य पदत्वाभावात्पररूपापत्ति-रिति वाच्यम्, पदपदेन पदत्वव्याप्यधर्मावच्छिन्नग्रहणेनादोषात् । अत एव कृदन्तेन समासे शिवार्च इति सिद्धम् । अत एव आसन्नविंशा इति संगच्छते । अन्यथा विंशतेरासन्ना इत्यर्थे बहुव्रीहौ 'बहुव्रीहौ संख्येये—' इति डचि, 'ति विंशतेर्डिति' इति तिश-ब्दस्य लोपे तस्याभीयत्वेनासिद्धत्वात् 'यस्येति च' इति लोपस्याप्रा-प्त्या प्रत्ययलक्षणनिमित्तकपदत्वमादाय पदान्तत्वेन अपदान्तत्वा-भावात्पररूपानापत्तिः । यदपि— 'छगलिनो ढिनुक्' इति नकारो-च्चारणेन तद्धितावयवहितपूर्ववृत्तिसुपमादाय प्रत्ययलक्षणेन पदत्वाभा-वबोधनाच्च दोष इति, तदपि मन्दम्; नकरोच्चारणाभावे ढिनुगन्तात् जसि 'जसि च' इति गुणे छागलेयय इति रूपम् । नकारोच्चारणे पदत्वान्नलोपे तस्यासिद्धत्वाद्गुणाप्राप्तौ यणि छागलेय्य इति रूपमि-ति फले विशेषेण नकारोच्चारणस्य सार्थक्येन तस्य ज्ञापकत्वानुप-पत्तिः । तथा ढिनुगन्तेन बहुव्रीहौ 'इनः स्त्रियाम्' इति कप्सिद्धये नकारोच्चारणं चरितार्थम् । तथा च काश्यपिनावित्यादौ दोषो दुर्वार

एवेति वार्तिकं नारम्भणीयमेव ।

यदुक्तम्—अपूर्ववचनद्वयारम्भे गौरवमिति, तन्न; त्वन्मतेऽपि वाक्यसप्तककल्पनाप्रयुक्तगौरवस्य दुरुद्धरत्वेन 'पदलाघवाद्योगविभागो गरीयान्' इति न्यायेन योगविभागप्रयुक्तगौरवस्य दुर्वारत्वात् । यत्तु—कार्यित्वनिवेशे परमदण्डिनावित्यादौ ङमुडापत्तिरिति, तन्न; 'ङमि च पदे' इत्यतः पदे इत्यनुवर्त्य ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्य अचः पदस्यैव ङमुड्विधानेन परमदण्डिनावित्यादौ दोषवारणस्य सूपपादत्वात् । यदपि—काश्यपिनावित्यादौ नलोपापत्तिरिति, तन्न; 'छन्दोब्राह्मणानि च तद्विषयाणि' इतिसूत्रस्थविषयग्रहणेन सुबुत्पत्तेः पूर्वमेव अध्येतृवेदितृप्रत्ययोत्पत्तेः शेखरे सिद्धान्तितत्वेनादोषादिति दिक् ।

यदुक्तम्—वचनारम्भप्रयुक्तगौरवस्य योगविभागप्रयुक्तगौरवेण निमातुं शक्यतया न दोष इति, तन्न; वार्तिकारम्भे पूर्वदण्डिप्रिय इत्यादौ नलोपानापत्तेः । यदुक्तम्— 'ङमि च पदे' इत्यतः पदे इत्यनुवर्तनात् अजादेः पदस्य ङमुडागमविधानात् परमदण्डिनावित्यादौ न दोष इति, तन्न; सुगणगीश इति समासे उत्तरपदस्यैव कार्यित्वेन त्वदुक्तरीत्या प्रत्ययलक्षणप्रतिषेधात् पदत्वाभावेन ङमुडनापत्तेः । तस्मात् परमदण्डिनावित्यादौ उत्तरपदत्वे चेतिनिषेधात् ङमुट्नेति भाष्यप्रामाण्यात् ङमन्तं यत्पदमित्येव व्याख्यानमुचितम् । यदपि—काश्यपिनावित्यादौ विषयग्रहणात्सुबुत्पत्तेः पूर्वमेव तद्धितोत्पत्त्या न दोष इति, तन्न; एवमपि यञन्तमधुशब्दात् बहुवचने 'यञञोश्च' इति लुकि 'जसि च' इति गुणे अन्तर्वर्तिविभक्त्य

पदत्वात् 'एङः पदान्तादति' इति पूर्वरूपस्य दुरुद्धरत्वापत्तेः। तस्माद्वार्तिकप्रत्याख्यानमेव ज्यायः।

यदुक्तम्—पूर्वदण्डिप्रिय इत्यादौ नलोपानापत्तिरिति, तन्न; 'उत्तरपदत्वे च' इति वार्तिकप्रत्याख्यानपरभाष्यप्रामाण्येन मध्यमपदत्वानाक्रान्तस्यैवोत्तरपदस्य ग्रहणेन पूर्वदण्डिप्रिय इत्यादावदोषात्। यदुक्तम्—सुगण्णीश इत्यादावजादेः पदस्य ङमुडागम इत्यर्थे अनेन पदत्वनिषेधात् ङमुडनापत्तिरिति, तन्न; अपदादिविधाविति पर्युदासेन पदादुद्देश्यकविधिभिन्नस्तत्सदृशो विधिर्गृह्यते। पदादित्वं च पदघटकवर्णध्वंसासमानाधिकरणोत्पत्तिकत्वम्। तद्विधिभिन्नो विधिरपि पदघटकवर्णप्रागभावासमानाधिकरणोत्पत्तिकवर्णोद्देश्यक एव गृह्यते। तेन पदान्तकार्य एवास्य निषेधस्य प्रवृत्त्या सुगण्णीश इत्यादौ समासे ईशशब्दस्य पदत्वेनादोषात्। यदपि—मधव इत्यादौ पूर्वरूपापत्तिरिति, तन्न; उरः केण उरःपेणेत्यादौ उत्तरपदस्य पदत्वाभावेन 'सोऽपदादौ' इति सत्वापत्त्या लक्ष्यासिद्धिरूपदोषस्य त्वन्मतेऽपि संभवेन अनभिधानादिना तद्वारणस्य उभयोरप्यावश्यकत्वात्।

यदुक्तम्—'उत्तरपदत्वे च' इति वार्तिके उत्तरपदेन मध्यमपदत्वानाक्रान्तस्यैव उत्तरपदस्य ग्रहणेन पूर्वदण्डिप्रिय इत्यादौ न दोष इति, तन्न; तथा सति पञ्चगवधन इत्यादौ गोशब्दस्य पदत्वनिषेधाभावेन 'एङः पदान्तादति' इति पूर्वरूपापत्तेः। यदप्युक्तम्—पदान्तकार्य एव प्रत्ययलक्षणनिषेधात् सुगण्णीश इत्यादौ न दोष इति, तदपि न; सुकरिणौ सुसर्पिषावित्यादौ णत्वषत्वयोर-

पदान्तकार्यत्वेन प्रत्ययलक्षणनिषेधाप्रवृत्त्या करिन् सर्पिस् इत्येतस्य पदत्वेन कार्यित्वनिवेशेऽपि णत्वषत्वयोरनापत्तेः । यदपि उरःकेण उरःपेणेत्यादौ उत्तरपदस्य पदत्वाभावेन 'सोऽपदादौ' इति सत्वापत्तिरिति, तन्न; अपदे इति न्यासेऽपि कुप्वोरित्यनुवृत्त्या 'यस्मिन्विधिः—' इति परिभाषया कवर्गादौ पवर्गादौ च पदभिन्ने इत्यर्थेनैव सिद्धे आदिग्रहणसामर्थ्येन अपदस्यैव आदिरित्यर्थलाभेन पदत्वयोग्यप्रातिपदिकानवयवस्यैव कवर्गादिग्रहणेनादोषात् । अत एव कृदन्तेन समासपक्षेऽपि त्वन्मतेऽपि न दोषः । मघव इत्यत्र अनभिधाने मानाभावेन दोषो दुर्वार एव ।

यदुक्तम्—पूर्वदण्डिप्रिय इत्यादौ दोषवारणाय मध्यमपदत्वानाक्रान्तेति विशेषणदानेऽपि पञ्चगवधन इत्यादौ दोष इति, तन्न; मध्यमपदत्वानाक्रान्तेत्यत्र मध्यमपदस्य उत्तरपदाव्यवहितपरकसुबन्तस्यैव ग्रहणेनादोषात् । यदुक्तम्—सुकरिणौ सुसर्पिषावित्यादौ णत्वषत्वयोरनापत्तिरिति, तन्न; णत्वस्य पदान्तकार्यत्वाभावेऽपि तन्निषेधस्य पदान्तकार्यत्वेन सुकरिणावित्यादावदोषात् । सुसर्पिषावित्यादौ तु 'अपदान्तस्य मूर्धन्यः' इत्यत्र प्रसज्यप्रतिषेधाश्रयणात् निषेधस्यापि पदान्तकार्यत्वेन एतन्निषेधप्रवृत्त्या षत्वसिद्धेः यदुक्तम्—अपदे इत्येव सिद्धे आदिग्रहणसामर्थ्यात् अपदस्य आदिरित्यर्थान्न दोष इति, तन्न; कुप्वोरिति द्वन्द्वनिर्देशेन द्वन्द्वे साहित्यावच्छिन्नकवर्गपवर्गयोरेवोपस्थित्या सप्तम्यन्तस्य अल्मात्रवाचकत्वाभावेन 'यस्मिन्विधिः—' इत्यस्याप्रवृत्त्या आदिग्रहणस्यावश्यकत्वात् । एवं च उरःकेणेत्यादौ दोषो दुर्वार एव । यदपि— मघव इत्यत्र पूर्वरूपापत्तिरिति, तन्न; 'एङः पदान्तादति' इत्यत्र

दि अन्तः पदान्त इत्यर्थाङ्गीकारेण प्रकृते पदपरकचरमावयवी-
भूतेङः परत्वाभावेनादोषात् ।

यदुक्तम् — उत्तरपदाव्यवहितपरकमध्यमपदत्वानाक्रान्तोत्तर-
दस्यैव पदान्तप्रयोज्यकार्ये कर्तव्ये प्रत्ययलक्षणप्रतिषेधाङ्गीकारान्न
ा इति, तन्न; एवमपि मय इत्यादौ दोषापत्तेः । न च पदे अन्तः
दान्त इति पूर्वोक्तरीत्या मधव इत्यत्रेवात्रापि न दोष इति वाच्यम्,
नितिपरस्य गोशब्दस्यानुकरणे गो अब्रवीदित्यादौ पूर्वरूपापत्तेः ।
च मय इत्यादौ उत्तरपदस्य तदघटितस्य वा पदत्वे कर्तव्ये लुमता
प्ते प्रत्ययलक्षणं नेत्यर्थ इति शेखरोक्तरीत्या न दोष इति
ाच्यम्, एवमपि मधव इत्यादौ दोषस्य दुर्वारत्वात् । तथा
उत्तरपदस्य तदघटितस्य उत्तरपदाव्यवहितपरकमध्यमपदत्वा-
ाक्रान्तस्य पदान्तप्रयोज्ये कार्ये कर्तव्ये प्रत्ययलक्षणप्रतिषेध
यर्थस्य फलितत्वेन उक्तानेकविशेषणघटितवार्तिकारम्भापेक्षया
दुक्तयोगविभागेन तत्साधनस्य लघुत्वात् । यदपि — उरः-
णेत्यादौ दोषस्तदवस्थ एवेति, तदपि न; कस्कादिषु भास्कर-
ब्दपाठेन कृदन्तेन समासे पूर्वपदस्य सत्वाभावज्ञापनात् । किं च
बहुच्पूर्वस्य च' इति वार्तिकेन प्रत्ययलक्षणप्रतिषेधात् बहुमेकृ
लमित्यादौ समुदायादुत्पन्नं सुपमाश्रित्य पदत्वे कर्तव्ये प्रत्ययलक्षण-
तिषेधापत्त्या कुत्वानापत्तिः । तस्मात्प्रत्याख्यानपक्ष एव युक्तः ।

यदुक्तम्—गो अब्रवीदित्यादौ गोशब्दस्यापदत्वेन पूर्वरूपा-
त्तेरिति, तन्न; प्रत्यासत्त्या पदपरकस्य पदचरमावयवस्यैव एङो ग्रहणेन
अब्रवीदित्यादौ दोषवारणसंभवात् । न चैवं हरे अ इत्याहेत्यादौ

अशब्दस्यैवानुकरणत्वेनापदत्वे एङः पदपरकपदचरमावयवत्वाभावात्पूर्वरूपानापत्तिः । सिद्धान्तेतु पूर्वरूपमिष्यत इति वाच्यम्, अत्र पदशब्देन पदत्वयोग्यस्य स्वातन्त्र्येण प्रयोगार्हस्य ग्रहणेनादोषात् । न चैवं गो अब्रवीदित्यादौ गोशब्दस्यापि स्वातन्त्र्येण प्रयोगार्हतया पदत्वयोग्यत्वात् पूर्वोक्तदोषस्तदवस्थ एवेति वाच्यम्, अत्र वार्तिके पूर्वपदस्य वृत्तिशब्दस्य लोपेन उत्तरपदशब्दस्य वृत्त्युत्तरखण्डपरत्वेन वृत्त्युत्तरखण्डस्य पदादिविधिभिन्ने पदान्तत्वप्रयोज्ये कार्ये प्रत्ययलक्षणप्रतिषेध इत्यर्थेन मघव इत्यादौ दोषवारणसंभवेन पदान्तपदे यथाश्रुतार्थस्यैवाङ्गीकारात् । तथा च सय इत्यादावपि न दोषः । एवं च बहुसेचावित्यादावुक्तरीत्यैव वारणसंभवात् ‘ बहुच्पूर्वस्य च ’ इति वार्तिकमपि नारम्भणीयम् । बहुसेक् कुलमित्यादौ वृत्तिचरमावयवस्य सेच् इत्यस्य पदत्वप्रयोज्ये कुत्वे कर्तव्ये तत्प्रकृतिकप्रत्ययस्यैव प्रत्ययलक्षणप्रतिषेधेन समुदायादुत्पन्नं सुपमाश्रित्य प्रत्ययलक्षणेन पदत्वात् कुत्वादिकं भवत्येव । यद्वा वृत्तिप्रयोज्यलुक एव प्रत्ययलक्षणप्रतिषेधाङ्गीकारेण बहुसेक् कुलमित्यादावदोषः । एतेन दण्डि कुलमित्यादौ व्यस्ते दोष इत्यपास्तम् । वस्तुतस्तु उत्तरपदशब्दः वृत्तिचरमावयवपरः । बहुसेचावित्यादौ चकारस्य वृत्तिचरमावयवत्वेऽपि सकारस्य वृत्तिचरमावयवत्वाभावेन तस्य पदत्वप्रयोज्ये ‘ सात्पदाद्योः ’ इति षत्वनिषेधे कर्तव्ये प्रत्ययलक्षणप्रतिषेधस्यैवाप्राप्त्या वार्तिके अपदादिविधाविति न कार्यमित्यपरं लाघवमिति दिक् ॥

इति प्रत्ययलक्षणप्रतिषेधवार्तिकार्थविचारः समाप्तः ।



॥श्रीः॥

## इको गुणवृद्धी ॥

नन्विदं सूत्रं व्यर्थम् । न च पचतीत्यादौ लिटस्तिपि 'तिङ् शित्—' इति सार्वधातुकत्वे ततः 'कर्तरि शप्' इति शपि तदादिग्रहणेन विकरणविशिष्टस्यापि अङ्गत्वात्पचेत्यकारान्तस्य 'सार्वधातुकार्धधातुकयोः' इति सूत्रेण, धात्वकारस्य च 'पुगन्त—' इति सूत्रेण गुणवारणार्थं सूत्रमिति वाच्यम्, अकारस्य आन्तरतम्यादकाररूपे गुणे सत्यपि रूपे विशेषाभावात् । न च पेचिथेत्यादौ गुणशब्देन भावितत्वेन एत्वाभ्यासलोपौ न स्यातामिति वाच्यम्, शसाददसाहचर्यात् गुणावयवीभूताकारस्यैव ग्रहणेन शशरिथेत्यादावेव तन्निषेधाङ्गीकारात् । न च सिद्धान्तेऽपि लुलविथेत्यादौ अवादेशस्य गुणशब्देन भावितौकारप्रयोज्यत्वेन निषेधानापत्तिरिति वाच्यम्, 'अचः परस्मिन्—' इत्यनेन निर्वाहात् । न च अचिकीर्षीदित्यादौ परत्वादल्लोपं बाधित्वा सिचि वृद्धिः स्यादिति वाच्यम्, चिकीर्षक इत्यत्रेव 'ण्यल्लोपौ—' इति वार्तिकेन पूर्वविप्रतिषेधेन पूर्वमल्लोपप्रवृत्त्या अकारे दोषाभावात् । न चैवमपि याता वातेत्यादौ आकारे गुणव्यावृत्त्यर्थं सूत्रमावश्यकमिति वाच्यम्, 'गापोष्टक्' इति टकः कित्करणेन आकारस्य गुणाभावज्ञापनात् । तथा हि—सामग इत्यादौ 'आतो लोप इटि च' इत्यालोपार्थं टकः कित्करणम् । यदि च आकारस्य गुणः स्यात्, तदा कित्करणमनर्थकमेव स्यात्; 'सार्वधातुक—' इति आकारस्य गुणे अकारे सति द्वयोरकारयोः 'अतो गुणे' इति पररूपे सामग इत्यादिसिद्धेः टकः

कित्त्वमतिरिच्यमानमाकारस्य गुणाभावं ज्ञापयति ।

यदुक्तम्—'गापोष्टक्' इति टकः कित्त्वम् आकारस्य गुणाभावं ज्ञापयतीति, तन्न; सामगायेत्यादौ आर्धधातुकनिमित्ते आकारस्य आन्तरतम्यादकारे गुणे ततो द्वयोरकारयोः पररूपे तस्य पूर्वान्तवद्भावेन धातुत्वात्तदकारस्य 'सुपि च' इति दीर्घे तस्य स्थानिवद्भावेन धातुत्वात् 'आतो धातोः' इति आल्लोपः स्यात् । सति तु कित्करणे पूर्वमेवाल्लोपस्य जातत्वेन एकादेशाभावात् पूर्वान्तवत्त्वेन धातुत्वासंभवात् 'आतो धातोः' इत्यस्याप्राप्तिरित्यतः सामगायेति सिध्यतीति टकः कित्करणस्य न वैयर्थ्यमिति न तस्य ज्ञापकत्वसंभवः ।

यदुक्तम्—सामगायेत्यादि न ज्ञापकत्वसंभव इत्यन्तम् तदापाततः; सामगायेत्यत्र संनिपातपरिभाषयैव आल्लोपस्य सुपरिहरत्वात् । तथा हि—सामगशब्दात् ङेप्रत्यये तस्य अकारान्तत्वेन ततः परस्य 'ङेर्यः' इति यादेशे कृते 'सुपि च' इति दीर्घे कर्तव्ये 'कष्टाय' इति निर्देशेन संनिपातपरिभाषाया अप्रवृत्तावपि 'आतो धातोः' इत्याल्लोपे कर्तव्ये संनिपातपरिभाषाप्रवृत्तेर्दुर्वारत्वेन तयैव सामगायेत्यत्र आल्लोपवारणसंभवेन रूपसिद्धेर्निष्प्रत्यूहतया कित्करणवैयर्थ्यस्य सूपपादत्वात् । अत एव 'ए ओङ्' इति सूत्रे सामगायेत्यत्राल्लोपव्यावृत्त्या टकः कित्करणस्य चारितार्थ्यमाशङ्क्य अकारसंनिपातमाश्रित्य प्रवृत्तो यादेशः संनिपातपरिभाषया लोपं न प्रवर्तयति; 'सुपि च' इति दीर्घं तु 'कष्टाय' इति निर्देशात् प्रवर्तयत्येवेति कैयटेन समाहितम् ।

यदुक्तम्—सामगायेत्यारभ्य समाहितमित्यन्तेन, तच्चिन्त्यम्; सामगायेत्यत्र 'ङेर्यः' इति यादेशोपजीव्यभूतस्य ह्रस्वाकारस्य 'सुपि च' इति दीर्घेणैव निवर्तितत्वेन दीर्घोत्तरं तदुपजीव्यानुवृत्तेरभावेन 'आतो धातोः' इत्यालोपे कृतेऽपि तेन यादेशोपजीव्यभूतह्रस्वाकारस्य विघातासंभवात् उपजीव्यविरोधस्य अयुक्तत्वमिति न्यायमूलकैतत्परिभाषाया एतादृशविषये अप्रवृत्तेः। तस्मात् 'आतो लोप इटि च' इत्यालोपस्य प्रवृत्तये किल्वमावश्यकमिति न तस्य वैयर्थ्याशङ्का। यदपि—'एओङ्' इति सूत्र इत्यादि, तदपि न युक्तम्; उच्चारणनिवृत्त्यर्थं सूत्रमिति सिद्धान्ते स्थापयिष्यमाणत्वेन पूर्वपक्षिणा उपन्यस्तस्य ज्ञापकस्य तात्पर्यं वर्णयितुं प्रवृत्तः कैयटस्तदनुसारेणैव कथंचित्संनिपातपरिभाषां संचारयन् टकः किल्वस्य ज्ञापकत्वं प्रतिपादितवानिति तद्विरोधस्याप्रयोजकत्वात्। अत एव शुभंयाशब्दस्य नपुंसकह्रस्वत्वे ङेर्यादेशे 'सुपि च' इति दीर्घे 'आतो धातोः' इत्यालोपे 'शुभंय्य' इत्येव रूपमिति माधवादिभिः स्वीकृतं संगच्छते। तस्मात् टकः किल्वं न ज्ञापकमिति सूत्रमावश्यकमेव।

अथ यदुक्तम्—सामगायेत्याद्यावश्यकमित्यन्तेन, तदयुक्तम्; सामगायेत्यत्र संनिपातपरिभाषाप्रवृत्तेः सुपपादत्वात्। तथा हि—'ङेर्यः' इत्यत्र 'अतो भिस ऐस्' इत्यतः 'अतः' इत्यनुवर्तते। तच्च 'तपरस्तत्कालस्य' इति शास्त्रेण मात्रिकत्वरूपधर्मविशिष्टावर्णत्वजात्यवच्छिन्नस्य उपस्थापकमिति मात्रिकत्वरूपधर्मविशिष्टस्यावर्णस्यैव यादेशं प्रत्युपजीव्यत्वेन दीर्घेण उपजीव्यभूतमात्रिकत्वांशस्य निवृत्तावपि विशेष्यभूतस्यात्वावच्छिन्नस्य आत्वेऽप्यनुवृत्त्या



लोपेन तस्यापि निवृत्तौ परिभाषाविरोधो दुष्परिहरः । अत एव टकः कित्करणस्यानन्यार्थत्वेन' ज्ञापकत्वप्रतिपादनपरम् 'ए ओङ्' इतिसूत्रस्थं प्रकृतसूत्रस्थं च भाष्यं संगच्छते । यदुक्तम्—नपुंसकस्य शुभंयाशब्दस्य चतुर्थ्येकवचने आल्लोपे शुभंय्य इत्येव रूपं माधवेनोक्तमिति, तदसदेव; उक्तभाष्यद्वयविरोधात् । तस्मात् टकः कित्करणं ज्ञापकमेवेति सूत्रमनादरणीयमेव ।

अथ यदुक्तम्—'ङ्यः' इत्यत्र अत इत्यनुवर्तते इत्यादि, तदयुक्तम्; 'तपरस्तत्कालस्य' इति शास्त्रेण तपरस्य न मात्रिकत्वसमानाधिकरणात्वजात्यवच्छिन्ने शक्तिः कल्प्यते, गौरवात् । किंतु अवर्णत्वव्याप्याऽऽत्वजात्यवच्छिन्न एव शक्तिः, लाघवात् । एवं च कारणीभूतव्याप्यजात्यवच्छिन्नस्य दीर्घेणैव निवर्तितत्वेन लोपेन दीर्घस्य निवृत्तावपि उपजीव्यविरोधस्य दुरुपपादत्वात् । अत एव 'ऋत इद्धातोः' इतिसूत्रस्थधातुग्रहणस्य मातॄणामित्यादि प्रयोजनं भाष्योक्तं संगच्छते । अन्यथा तुल्यन्यायेन 'ह्रस्वनद्यापो नुट्' इत्यत्र ह्रस्वपदेन मात्रिकत्वविशिष्टाच्त्वावच्छिन्नस्यैवोपस्थित्या मातॄणामित्यादौ 'नामि' इति सूत्रारम्भसामर्थ्यात्संनिपातपरिभाषां बाधित्वा पूर्वं दीर्घे कृते तेन मात्रिकत्वांशस्य विनाशेऽपि विशेष्यभूतस्य अच्त्वावच्छिन्नत्वस्यादेशेऽप्यनुवृत्त्या तस्य स्थाने प्राप्तस्य रपरस्य 'इर्' इत्यस्य उपजीव्यभूतानुवृत्ताच्त्वांशस्य निवर्तकतया संनिपातपरिभाषयैव तद्वारणसंभवेन तद्वारणाय कृतस्य धातुग्रहणस्य वैयर्थ्यापत्तेः । तदेतत्सकलमभिसंधाय शुभंये इत्येव रूपमिति माधवेनोक्तम् । तस्मात्पूर्वपक्ष्याशयप्रदर्शनपरं भाष्यकैयटादिकमादाय ज्ञापकत्वसमर्थनमयुक्तमेव ।

अथ यदुक्तम्—अत्पदस्य अवर्णत्वव्याप्यजात्यवच्छिन्ने शक्तिरिति, तदसमञ्जसम्; तादृशव्याप्यजातिसत्त्वे मानाभावात्। तपरसूत्रेण निर्दिश्यमानव्यक्त्यधिकरणमात्रिकत्वादिरूपकालपरिच्छिन्ने निर्दिश्यमानव्यक्तिवृत्तिजात्यवच्छिन्ने, व्यक्तिपक्षे तत्सवर्णे वा अदादिपदस्य शक्तिग्रहेण तेन मात्रिकत्वसमानाधिकरणात्वजात्यवच्छिन्नस्यैवोपस्थित्या विशिष्टस्य यादेशनिमित्तत्वप्रतीत्या तत्र दीर्घेण विशेषणीभूतमात्रिकत्वांशस्य नाशेऽपि विशेष्यभूतात्वांशस्यादेशेऽप्यनुवृत्त्या लोपेन तस्यापि नाशे परिभाषाविरोधस्य सूपपादत्वात्। यदपि—'ऋतः—' इति सूत्रभाष्यविरोधोद्भावनम्, तदप्यसमञ्जसमेव; संनिपातपरिभाषाया हि स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः संनिपातः, तादृशसंनिपातविघातुकस्य स्वातिरिक्तस्य स्वयमनिमित्तमित्यर्थः। प्रकृते च इत्वं प्रति प्रत्ययस्य कथंचिन्निमित्तत्वेऽपि ह्रस्वसंनिपातनिमित्तस्य नुडागमस्य अप्रत्ययत्वेनानिमित्तत्वेन परिभाषाया अप्रवृत्तेः। तस्मात् टकः कित्त्वं ज्ञापकमेवेति सूत्रमनारम्भणीयमेव।

यत्तूक्तम्—अवर्णत्वव्याप्यजातिसत्त्वे मानाभाव इत्यादि, तन्न सम्यक्; अकार आकारो न, अयमाकारो न त्वकार इत्याद्यनुगताकारप्रतीतिरेव मानत्वात्। अत एव 'अइउण्' इति सूत्रे 'तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः' इति वार्तिकस्थभाष्यव्याख्यानावसरे 'ननु सर्वेषामकाराणां यत्सामान्यम्, तदनुकरणमत्राकारः; तस्य च विवृतत्वे प्रतिज्ञायमाने सर्वेषां तत्प्रतिज्ञातमेवेति किमुच्यते अन्यत्रापि विवृतोपदेशः' इति कैयटेनाशङ्कितम्। तत्र हि सामान्यमित्यस्य अष्टादशावर्णव्यक्तिवृत्ति यत्सामान्यम्,

तन्नार्थः । तथा सति दीर्घप्लुतयोर्विकृतत्वस्य स्वतःसिद्धत्वेन अंशे प्रतिज्ञाया वैयर्थ्यप्रसङ्गात् । तस्मात् व्याप्यजातिरस्त्येवेति तदाशयः । अत एव कौस्तुभे अवर्णत्वावान्तरजातिरङ्गीकृता । तस्मात् तादृशव्याप्यजात्यवच्छिन्न एव अदादिपदानां शक्तिकल्पनस्य लघुतया तेन मात्रिकत्वसमानाधिकरणावर्णत्वरूपजात्यवच्छिन्नस्यानुपस्थित्या तादृशव्याप्यजात्यवच्छिन्नस्य दीर्घेणैव निवर्तितत्वेन लोपेन दीर्घस्यापि निवृत्तौ उपजीव्यविरोधस्य दुरुपपादत्वात् किल्करणं न ज्ञापकमिति सूत्रमारम्भणीयमेव ।

यदुक्तम्—अकारोऽयम्, नत्वाकारः । अकारोऽयम्, अकारोऽयमित्यनुगताकारप्रतीतिरेव मानमिति, तन्न; त्वदुक्तानुगताकारप्रतीतेर्मदुक्तरीत्या ह्रस्वत्वसमानाधिकरणव्यापकजातिविषयत्वेनाप्युपपत्त्या कृशत्वस्थूलत्वादिगुणभेदेन घटादिषु जातिभेदाभाववत् अत्रापि गुणभेदेन व्याप्यजात्यङ्गीकारे मानाभावेन फलाभावेन च तस्य अत्पदशक्यतावच्छेदकत्वासंभवात् । अत एव जातिपक्षे अणुदित्सूत्रप्रत्याख्यानपरं भाष्यं संगच्छते । अन्यथा घटपदेन द्रव्यत्वजातेरिव 'अस्य च्वौ' इत्यादौ अपदेन व्यापकजातेरनुपस्थित्या तत्र एतत्सूत्रप्रवृत्त्या दीर्घादीनां ग्रहणार्थमणुदित्सूत्रस्यावश्यकत्वेन जातिपक्षमाश्रित्य तत्प्रत्याख्यानासंगतिः । एवं च अत्पदस्य मात्रिकत्वादिगुणविशिष्टव्यापकजात्यवच्छिन्न एव शक्तिग्रहेण तेन तस्यैवोपस्थित्या दीर्घेण विशेषणांशनाशेऽपि विशेष्यांशस्य आदेशेऽप्यनुवृत्त्या लोपेन तस्यापि नाशे परिभाषाविरोधः स्पष्ट एव ।

यदुक्तम्—व्यापकजात्यवच्छिन्नस्यैव अत्पदेनोपस्थित्या दीर्घेण

मात्रिकत्वांशनाशेऽपि लोपेन विशेष्यभूतांशस्यापि नाशात् तद्विरोधः स्पष्ट एवेति, तदसत्; मात्रिकत्वविशिष्टावर्णस्यैव निमित्तत्वेन तत्र दीर्घेण निमित्ततावच्छेदकीभूतमात्रिकत्वांशविनाशोत्तरं तच्छून्यस्य निमित्तत्वे मानाभावेन लोपेन तस्य विनाशेऽपि निमित्तविनाशाभावेन आल्लोपो निमित्तं विघटयतीत्युक्तेर्निरालम्बनत्वेन परिभाषाया अप्रवृत्त्या आल्लोपवारणाय टकः कित्वस्यावश्यकत्वेन वैयर्थ्याभावाज्ज्ञापकत्वानुपपत्त्या याता वातेत्यादौ गुणवारणार्थं सूत्रमावश्यकमेव ।

यदुक्तम्—निमित्ततावच्छेदकशून्यस्य निमित्तत्वे मानाभावेन लोपेन तस्य नाशेऽपि नोपजीव्यविरोध इत्यादि, तदापाततः; धनिनं देवदत्तमुपजीव्य वृद्धस्य यज्ञदत्तस्य स्वोपजीव्यभूतदेवदत्तस्य धननाश इव उपजीव्यभूतदेवदत्तविनाशं प्रति प्रयोजकत्वेऽपि उपजीव्यविरोधस्य स्पष्टतया अत्र एकैवाकारव्यक्तिर्मात्रिकत्वाद्यष्टादशधर्मभेदेन भिन्नेति पक्षे कारणतावच्छेदकधर्मनाशेऽपि कारणीभूतव्यक्त्यनुवृत्त्या लोपेन तन्नाशे उपजीव्यविरोधस्य स्पष्टत्वात् मापगायेत्यादौ संनिपातपरिभाषयैव लोपस्य सुपरिहरत्वेन टकः कित्करणस्य ज्ञापकत्वस्य सुस्थत्वात् ।

यदुक्तम्—अकारव्यक्त्यैक्यात् कारणीभूतव्यक्तिनाशस्य सत्त्वेन संनिपातपरिभाषाविरोधः सूपपाद इति, तन्न; सिद्धान्ते अकारव्यक्तीनां नानात्वेन कारणीभूतव्यक्तेरप्यादेशेऽनुवृत्त्यभावेन कारणतावच्छेदकशून्यस्य कारणत्वे मानाभावेन च उपजीव्यविरोधस्य दुर्वचत्वात् । न च विशिष्टस्य यत्र निमित्तता, तत्र विशेष्यनाश इव विशेषणांशनाशेऽपि उपजीव्यविरोधः सुवचः ।

दीर्घव्यक्तावपि कारणतावच्छेदकीभूतात्वांशस्यानुवृत्त्या लोपेन उपजीव्यतावच्छेदकधर्मनाशेन 'उपजीव्यविरोधस्य सूपपादत्वादिति वाच्यम्, उपजीव्यतावच्छेदकीभूतात्वस्य नित्यत्वेन साक्षात्तन्नाशासंभवेन उपजीव्यभूतव्यक्तिनाशद्वारैव तन्नाशस्य वक्तव्यतया तस्याः पूर्वमेव नष्टत्वेन तन्नाशद्वारापि तदसंभवेन उपजीव्यव्यक्त्यन्यव्यक्तिनाशद्वारा तन्नाशस्याप्रयोजकत्वात् । तस्मात् सामगायेत्यादौ आल्लोपवारणेन टकः किन्त्वं चरितार्थमिति तस्य ज्ञापकत्वं न संभवतीति सूत्रमारम्भणीयमेव ।

यदुक्तम्—अकारव्यक्तीनां नानात्वेनेत्यादि, तन्न; संनिपातलक्षणविधिः स्वप्रवृत्तेः प्रागिव स्वप्रवृत्त्यनन्तरमपि यः संनिपातः तद्विघातकस्याप्यनिमित्तमिति परिभाषाया अर्थाङ्गीकारेण प्रकृते संनिपातपरिभाषाविरोधस्य सूपपादत्वात् । अत एव 'एङ्ह्रस्वात्—' इति सूत्रभाष्ये हे ज्ञानेत्यादौ मलोपाय हे कतरदित्यादौ लोपाभावाय च अङ्गाक्षेपहल्पदानुवृत्तिव्यधिकरणान्वयाद्याश्रयणं संगच्छते । अन्यथा 'अतोऽम्' इति सूत्रे म् इति च्छेदेनैव हे ज्ञानेत्यादौ लोपसिद्ध्या हे कतरदित्यादौ ह्रस्वात्परत्वाभावादेव लोपाप्राप्त्या तदुभयसिद्धये उक्तक्लेशाश्रयणं व्यर्थमेव स्यात् । मम तु म् इति च्छेदे हे ज्ञानेत्यादौ उक्तरीत्या संनिपातपरिभाषाविरोधाल्लोपानापत्त्या अम् इति च्छेदे उक्तक्लेशाश्रायणं सफलम् । एवं स्वप्रवृत्तेः प्रागिव स्वप्रवृत्त्यनन्तरमपि परिभाषाप्रवृत्तेः फलं तु, मतावित्यादौ 'अच्च घेः' इत्यत्वे औत्वे च कृते ततोऽदन्तत्वात् प्राप्तटापः स्वनिमित्तभूतप्रकृतिप्रत्ययानन्तर्यविघातुकस्य अप्रवृत्तिरिति 'कृन्मेजन्तः' इति सूत्रे आकरे स्पष्टम् । तस्मात् किन्त्वम् ज्ञापकमेवेति सूत्रं नारम्भणीयम् ।

यदुक्तम्—स्वप्रवृत्तेः प्रागिवेत्याद्युक्तरीत्या सामगायेत्यादौ लोपस्य वारणात् टकः कित्त्वं व्यर्थं 'सत् ज्ञापकमिति, तन्मन्दम्; प्रियाः सामगाः यासां ताः प्रियसामगाः पश्येत्यादौ टापा सहैकादेशस्य पूर्वान्तवत्त्वेन धातुत्वे प्राप्ताल्लोपवारणाय टकः कित्त्वस्य चारितार्थ्येन तेन आकारस्य गुणाभावकल्पनासंभवात् । तस्मात्सूत्रमारम्भणीयमेव ।

यदुक्तम्—प्रियसामगाः पश्येत्यादावाकारस्य लोपवारणार्थं टकः कित्करणमिति, तन्न; प्रियसामगाः पश्येत्यादौ प्राप्तस्य आल्लोपस्य लक्षणप्रतिपदोक्तपरिभाषया वारणसंभवात् । न च वर्णग्रहणे तस्या अप्रवृत्तेः 'आदेचः—' इति सूत्रस्थोपदेशग्रहणेन ज्ञापितत्वात् कथं तयात्र निर्वाह इति वाच्यम्, ओत्सूत्रे 'ल्यन्तस्य प्रतिषेधो वक्तव्यः । अनदः अदः समभवत् अदोभवत्' इति वार्तिकस्य फलमुक्त्वा, 'न वक्तव्यः लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्येत्वं न भविष्यति' इति भाष्यप्रामाण्येन वर्णग्रहणेऽपि परिभाषाप्रवृत्त्या आल्लोपस्य सुपरिहरत्वात् । तस्मात् टकः कित्करणं ज्ञापकमेव ।

यदुक्तम्—प्रियसामगाः पश्येत्यादावाल्लोपस्य लक्षणप्रतिपदोक्तन्यायेनैव वारणं सुशकमिति, तन्न; वर्णग्रहणे एतत्परिभाषायाः प्रवृत्तौ क्नापयतीत्यादौ पुगागमानापत्तेः । किंच 'आतो धातोः' इति सूत्रे लक्षणप्रतिपदोक्तपरिभाषायाः प्रवृत्तौ पशुपः क्षीरपः पश्येत्यसिद्धवत्सूत्रभाष्यप्रयोगो न संगच्छेत, उक्तरीत्या तत्रापि आल्लोपाप्रवृत्तिप्रसङ्गात् । किंच यस्य रूपस्य लक्षणप्रवृत्तिं

विना नैव संभवः, तादृशलाक्षणिकस्यैव तत्परिभाषाविषयत्वम् । अत एव अतिखट्वायेत्यत्र आकारस्य लाक्षणिकत्वेन न याडिति सिद्धान्तः संगच्छते । अन्यथा सूत्रस्य निशायै इत्यादौ चारितार्थ्येन खट्वायै इत्यत्राप्याकारस्य लाक्षणिकत्वेन याडनापत्त्या भाष्यासंगतिः । तस्मात् प्रियसामगाः पश्येत्यादौ प्राप्तस्याल्लोपस्य वारणेन टकः कित्त्वं सार्थकमिति सूत्रमारम्भणीयमेव ।

यदुक्तम्—प्रियसामगाः पश्येत्यादौ दोषस्य दुरुद्धरत्वेन कित्त्वस्य तदर्थतया ज्ञापकत्वासंभवात् सूत्रमावश्यकमिति, तन्न; 'आतोऽनापः' इति सूत्रकरणेनात्र लोपवारणात् । आबन्तप्रकृतिकाचारक्विपोऽनभिधानात् नास्मिन् न्यासे किमपि दूषणम् । तस्मात् टकः कित्त्वं ज्ञापकमेवेति सूत्रमनारम्भणीयमेव ॥



॥ श्रीः ॥

## सुडनपुंसकस्य ॥

अत्र सुडिति औटष्टकारेण प्रत्याहारः, प्रत्यासत्तिन्यायात् औटष्टकारस्यानन्यार्थत्वाच्च । सुडागमस्य तु नात्र ग्रहणम्, 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इति परिभाषया प्रत्ययस्यैव ग्रहणात् ।

अत्र सूत्रे अनपुंसकग्रहणं मास्तु । स्वमोस्तावात् सर्वनामस्थानसंज्ञायां दोषाभावः । न च ज्ञानमित्यादौ 'नपुंसकस्य झलचः'

इति नुमापत्तिरेव दोष इति वाच्यम्, संनिपातपरिभाषया अङ्गस्य नुमभाव इति वक्तुं शक्यत्वात्।

न च प्रियक्रोष्टुनी इत्यत्र सर्वनामस्थानत्वात् तृज्वद्भावः स्यादिति अनिष्टं प्रसज्येतेति वाच्यम्, 'वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन' इति वार्तिकेन तृज्वद्भावं बाधित्वा प्रथमं नुम्प्रवृत्त्या अदोषात्। अत एव प्रियतिसृणी इत्यादौ 'ऋतो ङि—' इति गुणोऽपि न।

न च वारिणी इत्यादौ 'सर्वनामस्थाने च—' इति नान्ताङ्गस्य विहितो दीर्घः स्यादेवेति वाच्यम्, 'सर्वनामस्थाने चाश्यसंबुद्धौ' इति न्यासेन सत्यामपि संज्ञायां दोषाभावात्।

न चैवमपि कर्तृणी इत्यादौ 'अप्तृन्—' इति दीर्घः स्यादिति वाच्यम्, 'अप्तृन्—' इति सूत्रेऽपि 'सर्वनामस्थाने च—' इति सूत्रात् अश्यसंबुद्धावित्यस्यानुवृत्त्या अदोषात्।

न चैवमपि ज्ञाने इत्यादौ 'नपुंसकस्य झलचः' इति नुमापत्तिः; गोची इत्यादौ च 'अञ्चेश्छन्दस्यसर्वनामस्थानम्' इत्यादीनामप्रवृत्त्यापत्तिश्चेति वाच्यम्, एवमपि 'सुडनपुंसकस्य' इत्यत्र 'सुडशी' इति न्यासे उक्तसकलदोषाणां वारणसंभवात्।

न च इमे इत्यत्र 'जसः शी' इति श्यादेशस्य 'ऊडिदम्—' इति स्वरानापत्तिः, तस्यासर्वनामस्थानत्वेऽपि 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वसिद्धेः।

न च इमे इत्यत्र 'यस्येति च' इति लोपापत्तिरिति वाच्यम्,

'औङः श्याम्—' इति वार्तिके 'औङः' इत्यस्याकरणेन अदो-पादिति दिक् ॥



॥श्रीः॥

**अतोऽम् ॥**

अत्र 'मतः' इत्येव सूत्रमस्तु; अदन्तादङ्गात्परयोः स्वमोः म् आदेश इत्यर्थः।

न च विधेयस्य पूर्वं प्रयोगो न दृष्ट इति वाच्यम्, 'अपृक्त एकाल्—' इत्यादौ तथा दृष्टत्वात्। यद्वा, यथाश्रुतमेव 'अतो म्' इति सूत्रमस्तु; म् इति च्छेदः क्रियताम्, न तु अम् इति।

न च यथाश्रुते म् इति च्छेदे अम् इति च्छेदे वा न लाघव गौरवविचारावसर इति वाच्यम्, म् इति च्छेदे 'एङ्ह्रस्वात्—' इति सूत्रे हल्ग्रहणानुवृत्तिर्न कर्तव्या; संबुद्धिग्रहणस्य च वैयधिकरण्येन अन्वयो न स्वीकर्तव्य इति लाघवसत्त्वात्।

न च ज्ञानमित्यादौ सोमादेशे 'सुपि च' इति दीर्घं स्यादिति वाच्यम्, संनिपातपरिभाषया दीर्घाप्रवृत्तेः सुवचत्वात्।

न च 'कष्टाय क्रमणे' इति निर्देशात् 'सुपि च' इति दीर्घविषये संनिपातपरिभाषा न प्रवर्तत इति ज्ञापितत्वात् प्रकृते दोष स्यादेवेति वाच्यम्, ज्ञापकस्य विशेषापेक्षत्वेन चतुर्थ्येकवचने तथा

ज्ञापनेऽपि अन्यत्र परिभाषाप्रवृत्तेः सुस्थत्वात् । अत एव 'सुपि चेति दीर्घो यद्यपि परः, तथापीह न प्रवर्तते, संनिपातपरिभाषाविरोधात्' इति मूलग्रन्थोऽपि संगच्छते ।

न च सिद्धान्ते दीर्घान्ते सर्वत्र नपुंसके ह्रस्वस्यावश्यंभावेन 'अतः' इति तपरकरणस्य व्यावर्त्यासंभवेन आदेशं प्रति ह्रस्वान्ताङ्गस्य उपजीव्यत्वाभावेन कथं संनिपातपरिभाषाप्रवृत्तिरिति वाच्यम्, ज्ञाक्षिरित्यादौ 'अङ्गसंज्ञा तद्धिनिमित्तं स्यादिति भाष्यप्रामाण्येन प्रकृतिविभक्त्योरानन्तर्यमुपजीव्य प्रवृत्तस्यादेशस्य दीर्घानिमित्तत्वमिति परिभाषाप्रवृत्तेः सूपपादत्वात् ।

न च द्वितीयैकवचने 'आदेः परस्य' इति अकारस्य मकारापत्तिरिति दोष इति वाच्यम्, सत्यपि तथा आदेशे संयोगान्तलोपेनेष्टसिद्धेः ।

न च 'यणः प्रतिषेधः' इति वार्तिकप्रत्याख्यानाय झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोपविधानादत्र लोपो न प्राप्नोतीति वाच्यम्, 'अमो मश्' इति सूत्रे भाष्ये शित्त्वप्रत्याख्यानावसरे 'अमो म्' इत्युक्त्वा मकारान्तरप्रश्लेषेण सर्वादेशत्वमुक्तम् । कैयटेन च संयोगान्तलोपेनेष्टं सिद्धमित्युक्तम् । तथा च तादृशभाष्यप्रामाण्येन—संयोगान्तस्य लोपो भवति, संयोगान्तस्य झलो लोपो भवति—इति वाक्यद्वयाङ्गीकारेण द्वितीयवाक्येन प्रथमवाक्यस्य क्वाचित्कत्वबोधनेन पूर्ववाक्यस्य क्वचिदझल्यपि प्रवृत्त्यङ्गीकारेण प्रकृते च प्रथमवाक्यप्रवृत्त्या अदोषादिति दिक् ॥



॥ श्रीः ॥

**षट्चतुर्भ्यश्च** ॥

षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः स्यादिति सूत्रार्थः ।

अत्र सूत्रे चतुर्ग्रहणं न कार्यम् ।

न च चतुर्णामिति रूपासिद्धिरिति शङ्क्यम्, 'ष्णरान्ता षट्' इति न्यासेन षान्ता नान्ता रेफान्ताश्च संख्याः षट्संज्ञका इत्यर्थकेन चतुर्शब्दस्य षट्त्वाङ्गीकारेण तत्र च षट्त्वादेव नुडागमसिद्धेः ।

न च चत्वार इत्यादौ जश्शसोर्लुगापत्तिरिति वाच्यम्, 'अर्षड्भ्यो लुक्' इति न्यासेन निर्वाहात् रेफान्तभिन्नेभ्यः षट्संज्ञकेभ्यः परयोर्जश्शसोर्लुगिति तदर्थात् ।

न चैवमामि नुडर्थमुपात्तस्य चतुश्शब्दस्य प्रत्याख्यानाय सर्वास्वपि विभक्तिषु षट्संज्ञामभ्युपगम्य अतिप्रसङ्गे प्राप्ते तत्परिहारार्थम् 'अर्षड्भ्यो लुक्' इति न्यासकरणमनुचितम् 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादिति वाच्यम्, सर्वत्र षट्संज्ञाभ्युपगमेन बहुषु स्थलेषु जायमानपदलाघवानुरोधेन एकत्रातिव्याप्तितत्परिहारकल्पने बाधकाभावात् कल्प्यमानन्यासस्यापि लघुत्वाच्च तथा हि— 'षट्चतुर्भ्यो हलादिः' इति सूत्रे एभ्यः परा हलादिविभक्तिरन्तोदात्ता इत्यर्थके चतुर्शब्दो न पाठ्यः, षट्त्वादेव तस्यापि संग्रहात् ।

ननु चतेरुरन्प्रत्यये चतुश्शब्दस्य सिध्यमानत्वेन चतुर्भ्य इत्यादौ परत्वात् नित्स्वरप्रयुक्ताद्युदात्तत्वापत्तिः; न च, विशेषविहितत्वात

विभक्त्युदात्तत्वं स्यादिति वाच्यम्, पञ्चभ्य इत्यादौ तस्य चारितार्थ्यात्। सिद्धान्ते तु प्रतिपदोक्तत्वान्न दोष इति चेत्, न; सुबुत्पत्तेः प्रागेव नकारस्येत्संज्ञानन्तरं नित्त्वप्रयुक्ताद्युदात्तत्वे सिद्धे ततः प्रातिपदिकसंज्ञायां सुबुत्पत्तौ विभक्त्युदात्तत्वस्यानेन विधीयमानतया तुल्यकालप्रवृत्त्यभावेन विप्रतिषेधसूत्राप्रवृत्त्या 'सतिशिष्टस्वरबलीयस्त्वम्' इति न्यायाच्च विभक्त्युदात्तत्वस्यैव निरपवादत्वेन स्थितत्वात् । किंच स्वस्रादिगणे चतसृशब्दोऽपि न पाठ्यः, 'न षट्स्वस्रादिभ्यः' इति षट्त्वादेव निषेधसिद्धेः चतसृशब्दस्यापि स्थानिवद्भावेन चतुर्शब्दत्वात् बहिरङ्गपरिभाषया असिद्धत्वेन वा तस्यापि षट्त्वात् ।

न चैवं चतस्र इत्यादौ जश्शसोर्लुगापत्तिः, स्थानिवद्भावेन षट्त्वात् रेफान्तत्वस्यापि अल्विधित्वेन आनयनासंभवादिति वाच्यम्, 'अचि र ऋतः' इत्यस्य बाध्यसामान्यचिन्तापक्षाश्रयणेन स्वविषयप्राप्तसर्वबाधकत्वात् लुकोऽपि बाधकत्वौचित्येनादोषात् । अत एव आमि नुटः अचि रादेशेन बाधमाशङ्क्य 'न तिसृचतसृ' इति ज्ञापकान्नेति समाहितं भाष्ये । संनिपातपरिभाषया वा न लुक् ।

किं च 'षट्कतिकतिपयचतुरां थुक्' इति सूत्रे चतुर्ग्रहणं कतिग्रहणं च न कार्यम्, तत्रत्यषट्पदेन अनयोरपि ग्रहणसंभवात् ।

न च तत्र षट्पदेन षट्संज्ञकानां ग्रहणे पञ्चन्शब्दादपि डटि थुगापत्तिरिति वाच्यम्, 'नान्तादसंख्यादेर्मट्' इति मडागमेन थुको बाधौचित्यात् ।

न च प्रकृतेस्थुकः कथं प्रत्ययसंबन्धिमटा बाधसंभव इति

वाच्यम्, येन नाप्राप्तिन्यायेन तक्रकौण्डिन्यन्यायेन वा सत्यपि संभवे बाधकत्वसंभवेनादोषात्।

न चैवमपि एकादशेत्यादावपि थुगापत्तिरिति वाच्यम्, 'नान्तान्मट्' 'असंख्यादेः' इति योगविभागेन निर्वाहात् नान्तात् संख्यादेर्मट्थुकौ न स्त इति तदर्थात्।

न च 'अनन्तरस्य—' इति न्यायान्मट एव निषेधः स्यादिति वाच्यम्, योगविभागसामर्थ्येन 'अनन्तरस्य—' इति न्यायं बाधित्वा तस्यापि निषेधप्रवृत्तेरिति दिक्॥



॥ श्रीः ॥

## हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्॥

अत्र 'ङ्यापः सोः' इत्येवास्तु। ङ्याबन्तात्परस्य सोर्लोप इति सूत्रार्थः। हलन्तात्परेषां सुतिसीनां संयोगान्तलोपेनैव निर्वाहः।

न च राजेत्यादौ संयोगान्तलोपस्य असिद्धत्वात् नलोपानापत्तिरिति वाच्यम्, 'न ङिसंबुद्ध्योः' इति संबुद्धिग्रहणेन नलोपविषये संयोगान्तलोपस्य सिद्धत्वज्ञापनात्।

न च गोमानित्यादौ नलोपापत्तिः; ज्ञापकस्य सजातीयापेक्षत्वेन यत्र नकारविभक्त्योरानन्तर्यम्, तत्रैव सिद्धत्वज्ञापनात्

न च हे ब्रह्मन्नित्यादौ लुकि तत्र नलोपनिषेधार्थं संबुद्धि-

ग्रहणस्यावश्यकतया न ज्ञापकत्वसंभव इति वाच्यम्, 'न ङिसंबुद्ध्योः' इत्यस्य सप्तम्यन्तत्वेन लुका लुप्ते प्रत्ययलक्षणाभावेन 'संबुद्धौ वा नपुंसकानाम्—' इत्यस्यावश्यकतया च संबुद्धिग्रहणस्य नपुंसकविषयत्वाभावेन उक्तज्ञापकत्वस्य सुस्थत्वात् ।

न च 'वा नपुंसकानाम्—' इत्येव भाष्ये पाठेन तत्र संबुद्धिग्रहणानुवर्तनाय तत्; इतरथा नपुंसके सर्वत्र विकल्पापत्तिः ; तस्मान्न संबुद्धिग्रहणस्य ज्ञापकतेति वाच्यम्, तथा सति वार्तिक एव संबुद्धिग्रहणे कर्तव्ये सूत्रे संबुद्धिग्रहणस्य 'इह किंचित्त्रपो' इति न्यायेन ज्ञापकत्वसंभवात् ।

न च अभिनोऽत्र इत्यत्र 'दश्च' इति रुत्वे तस्य 'अतो रोः—' इति उत्वे संयोगान्तलोपस्यासिद्धत्वात् अकारपरत्वाभावादुत्वानापत्तिरिति वाच्यम्, 'संयोगान्तलोपो रोरुत्वे' इति वार्तिकेन तस्यासिद्धत्वनिषेधेनादोषात् ।

न चेदं वार्तिकमपूर्वमाश्रयणीयमिति गौरवमिति वाच्यम्, 'हरिवो मे दिनं त्वा' इत्यत्र हरिशब्दान्मतुपि संबुद्धौ मतुपो मस्य 'छन्दसीरः' इति वत्वे नुमि संयोगान्तलोपे 'मतुवसोः—' इति रुत्वे 'हशि च' इति उत्वे कर्तव्ये तलोपस्यासिद्धत्वाभावाय तस्यावश्यकत्वात् ।

न चैवमपि अभिनोऽत्र इत्यत्र 'एङः पदान्तादति' इति पूर्वरूपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वात् उक्तरूपासिद्धिरिति वाच्यम्, 'संयोगान्तलोपो रोरुत्वे' इति वार्तिके उत्वे इति विषयसप्तम्या-

श्रयणेन ‘ न मु ने ’ इतिवदुत्वे कर्तव्ये कृते च असिद्धत्वनिषेधेन दोषात् ।

न चैवमपि बिभर्तेर्जागर्तेश्च लङि तिपि अबिभर्भवा अजागर्भवानित्यत्र ‘ रात्सस्य’ इति नियमात् संयोगान्तलोपो प्राप्नोतीति तत्र विभक्तिश्रवणप्रसङ्ग इति वाच्यम्, ‘ रात्सस्य इत्यत्र तकारस्यापि प्रश्लेषेण संयोगान्तलोपस्य सूपपादत्वात् ।

न च कीर्तयतेः क्विपि णिक्विलोपयोः सौ कीर्त् इत्यत्रा लोपः स्यादिति वाच्यम्, ‘यथालक्षणमप्रयुक्ते’ इति भाष्येण त लोपस्येष्टत्वबोधनात् तकारान्तरप्रश्लेषेण अर्थवत्तकारस्यैव लोपवि धानेनादोषाच्च।

न च उखास्रत् इत्यत्र दत्वस्य असिद्धतया संयोगादिलो असकारान्तत्वात् असति दत्वे सो रुत्वविसर्गयोः ‘उखास्रः’ इत्य निष्टं रूपं स्यादिति वाच्यम्, ‘वस्वादिषु दत्वं सिद्धं वाच्यम्’ इ दत्वस्य प्रवृत्तेः।

न चापदान्तत्वाद्दत्वं न स्यादिति वाच्यम्, स्वादिषु असर्व नामस्थाने यचीति च्छेदेन सावपि पदं भवतीति पक्षाश्रयणेन दत्वप्रवृ त्तेर्निर्बाधत्वात्।

न च सौ पदत्वाश्रयणे राजेत्यादौ संयोगान्तलोपस्यासिद्ध तया प्रथमं नलोपे सो रुत्वविसर्गौ स्यातामिति वाच्यम्, ‘इतो ऽत्सर्वनामस्थाने’ इत्यत्वे कृते उक्तरीत्या नलोपे च पन्था इत्यस सिद्धौ ‘पथिमथि—’ इत्यात्वविधानेन प्रथमं सुलोपस्य ज्ञापनात्।

न च हे पन्था इत्यत्र 'सर्वनामस्थाने च—' इति दीर्घप्र-
ाप्त्या तत्राकारविधानं चरितार्थमिति वाच्यम्, एवं तर्हि 'न ङिसंबु-
द्ध्योः' इत्यस्यैवोक्तार्थे ज्ञापकत्वसंभवेनादोषात्। तथा हि—ङिसंबु-
द्ध्योरिति षष्ठ्यन्तम्; ङ्यन्तस्य संबुद्ध्यन्तस्य च नलोपो नेति व्या-
ख्यायते; न हि नलोपात्पूर्वं संयोगान्तलोपं विना संबुद्ध्यन्तप्राति-
पदिकान्तनकारो लक्ष्यते। अतो ज्ञायते—नलोपात्पूर्वमेव संयोगान्त-
लोप इति।

न चैवं विद्वानित्यत्र 'सान्तमहतः—' इति दीर्घान्नित्यत्वा-
परत्वाच्च दत्वे तस्यैव संयोगान्तलोपे विद्वन्निति स्यात्। दीर्घविधिस्तु
विद्वांसावित्यत्र चरितार्थः। किंच पिपठीरित्यत्र संयोगादिलोपे रुत्वे
विसर्गे च 'र्वोरुपधायाः—' इति दीर्घो न स्यात्। एवं शकधातो-
र्यङ्लुगन्तात् लङि तिपि सिपि वा अशाशक् इत्यत्र संयोगादिलोपः
स्यादिति वाच्यम्, न वयं सौ पदत्वमाश्रित्य सिद्धकाण्डे दत्वं
समाश्रित्य उखास्रत् इत्यादिरूपसाधने प्रवर्तामहे, येन भवदुक्तदूषणं
दुरुद्धरं स्यात्। अपि तु संयोगादिलोपात्प्राक् विभक्तिसंयोगान्त-
लोपो भवतीति ज्ञापयामः। तथा हि—'सिप्यनस्तेः' इति सूत्रेण
सस्य तिपि परे दत्वं विधीयते। यदि अचकात् इत्यत्र संयोगान्त-
लोपात्पूर्वं संयोगादिलोपः स्यात्, तर्हि व्यर्थमेव स्याद्दत्वविधानमिति
तदुक्तार्थे ज्ञापकं भवति।

न च भूयादित्यत्र दोषः, धात्ववयवसंयोगादिलोपात्पूर्वं वि-
भक्तेः संयोगान्तलोप इति ज्ञापनेनादोषात्।

न चैवमपि राजेधते चक्रयत्र राजा च्छत्रमित्यादौ वृद्धिगुण-

तुगादिकं न स्यात् संयोगान्तलोपस्यासिद्धत्वादिति वाच्यम्, 'संयोगान्तलोपो रो रुत्वे' इति वार्तिके 'रो रुत्वे' इत्यपनीय 'संयोगान्तलोपः संधौ' इति करिष्यते। तथा च संयोगान्तलोपः संधौ सिद्ध इत्यर्थेनादोषात्। यद्वा 'न ङिसंबुद्ध्योः' इति सूत्रेण विभक्तिसंयोगान्तलोपस्य नलोपविषये असिद्धत्वाभावो ज्ञाप्यते। 'न मु ने' इतिवत् नलोपे कर्तव्ये कृते च संयोगान्तलोपो नासिद्ध इति तदर्थः। एवं च 'ङ्याप: सोः' इति न्यासे न किंचिदनिष्टम्। न च अविभा राज्यमित्यादौ संयोगान्तलोपस्यासिद्धत्वात् दीर्घो न स्यादिति वाच्यम्, लीढः अजर्घा इत्यादिभाष्योदाहरणे 'ढ्रलोपः—' इति दीर्घे कर्तव्ये ढत्वरुत्वयोरसिद्धत्वात् दीर्घाप्राप्तौ तथोदाहरपरभाष्यप्रामाण्येन 'पूर्वत्रासिद्धम्' इति सूत्रस्थपूर्वपदेन ढ्रलोपसूत्रस्याग्रहणे नादोषात्। अत एव चतू राजने इत्यत्र सुचः संयोगान्तलोपस्यासिद्धत्वाभावेन दीर्घः सिध्यतीति दिक्॥



॥ श्रीः ॥

## सर्वस्य द्वे ॥

'नित्यवीप्सयोः' इत्याद्युत्तरसूत्रेषु विधेयानिर्देशात् अस्य विधित्वे तेषां नियामकतापत्त्या अधिकारत्वे विधायकतापत्त्या तत्र च विधिनियमयोर्विधेरेव ज्यायस्त्वाच्च अयमधिकारः। तथा च 'नित्यवीप्सयोः' इत्युत्तरसूत्रे उपस्थित्या आभीक्ष्ण्ये वीप्सायां च गम्यमानायां सर्वस्य द्वे भवत इति पदैकवाक्यतया अन्वयः।

अत्र सूत्रे किं स्थाने द्विर्वचनम्, उत द्विःप्रयोगो द्विर्वचनमिति विशयः। तत्र तावद्विचार्यते—इदं स्थाने द्विर्वचनमेव। तथा हि— द्वे इत्यनन्तरं शब्दानुशासनप्रस्तावात् शब्दस्वरूपे इति पदमध्याह्रियते। तेन च सर्वस्येति स्थानषष्ठीति लभ्यते। अत एव सर्वस्येति पदमपि सार्थकम्। अन्यथा धातुवाक्ययोर्द्वित्ववारणाय आवश्यकेन पदस्येत्यपकर्षणेनैव सिद्धेस्तत् व्यर्थं स्यात्। किं च द्विःप्रयोगरूपत्वे पचसि पचसीत्यादौ समुदायस्य पदत्वाभावेन आम् पचसि पचसि देवदत्तेत्यादौ एकान्तरता न स्यात्। स्थानेद्विर्वचनत्वे तु समुदायस्यादेशत्वेन स्थानिवद्भावेन च तत्र पदत्वस्य सुलभतया सा सिध्यतीति इदं द्विर्वचनं स्थानेद्विर्वचनमेव॥

यदुक्तम्— द्वे इत्यनन्तरं शब्दस्वरूपे इति पदाध्याहारेण स्थानेद्विर्वचनत्वं सेत्स्यतीति, तन्न; उच्चारणे इति पदाध्याहारे द्विःप्रयोगरूपत्वस्यापि संभवात्। षाष्ठद्वित्वस्य द्विःप्रयोगरूपत्वे एवमेवोपपत्तेर्वर्णनीयत्वात्। यदपि—सर्वपदं षष्ठ्याः स्थानार्थकत्वसाधनद्वारा स्थानेद्विर्वचनपक्ष एव चरितार्थम्। अन्यथा पदस्येत्यपकर्षणेनैव इष्टसिद्धेस्तत् व्यर्थं स्यादिति, तदपि न; सर्वशब्दस्यावयवकात्स्न्र्यवृत्तितया सर्वावयवोपेतस्य द्वित्वम्, न तु कश्चिदप्यवयवो त्यज्येत इत्यर्थबोधकत्वेन चारितार्थ्यात्। अन्यथा यत्किंचिदवयवस्य द्वित्वेऽपि अवयवान्तरस्य तदसिद्धिप्रसङ्गात्। यदपि—द्विः प्रयोगरूपत्वे आम् पचसि पचसि देवदत्तेत्यादौ एकान्तरता न स्यादिति, तदपि न; प्रथमसिपः प्रकृतिभागमध्ये प्रवेशेन तद्ग्रहणेन ग्रहणात् द्वितीयस्य च प्रत्ययमध्यपातेन तद्ग्रहणेन ग्रहणाद्वा समुदायस्य पदत्वसिद्धेः। किं च आदेशरूपत्वे बिसं बिसमित्यादौ सकारस्य षत्ववारणाय

'आदेशप्रत्यययोः' इति सूत्रे आदेशरूपः सकार इति व्याख्यानमाश्रयणीयम् । तच्च प्रत्ययशब्दस्य प्रत्ययावयवपरत्वसिद्ध्यर्थम् 'एकापि षष्ठी–' इति न्यायाश्रयणे प्रत्ययशब्दमात्रस्य लक्षणया तदवयवपरत्वे वा उपपद्यत इति क्लेशः । द्विःप्रयोगरूपत्वे तु तत्र षत्वाप्राप्त्या तादृशः क्लेशो नाङ्गीकरणीय इति द्विःप्रयोगरूपत्वमेवोचितम् ॥

यदुक्तम्—उच्चारणपदाध्याहारेण द्विःप्रयोगत्वं सेत्स्यतीति, सत्यमिदम् ; तथापि विनिगमनाविरहात् शब्दस्वरूपे इत्यध्याहारेण स्थानेद्विर्वचनत्वमेवास्ताम् । यदपि— सर्वावयवोपेतस्य द्वित्वम्, न तु कश्चिदप्यवयवो वर्जनीय इत्येतद्बोधकतया सर्वस्येत्यस्य सार्थक्यमिति, तदपि न ; विनिगमनाविरहेण एकाच्द्विर्वचनन्यायेन समुदायस्य द्वित्वे सर्वस्याप्यवयवस्य द्वित्वसंभवेन तत्पदवैयर्थ्यस्य तदवस्थत्वात् । अतस्तत्पदं तदुत्तरषष्ठ्याः स्थानार्थकत्वबोधनद्वारा स्थानेद्विर्वचनपक्ष एव सार्थकमिति तत् तस्य ज्ञापकमेव । यदपि— प्रथमसिपः प्रकृतिमध्ये प्रवेशेन तद्ग्रहणेन ग्रहणात् द्वितीयपच: प्रत्ययमध्ये प्रवेशेन तद्ग्रहणेन ग्रहणाद्वा समुदायस्य पदत्वं सिध्यतीति, तदपि न ; एकैकस्य एकप्रकृतित्वादिपर्याप्त्यधिकरणत्वेन तत्समुदायमध्यपतितस्य तद्ग्रहणेन ग्रहणायोगात् । तदन्तसंज्ञासूत्रे भाष्ये अस्य न्यायस्य 'नेदमदसोरकोः' इति ज्ञापकमूलकत्वोक्त्या शास्त्रीयमध्यपातविषयत्वाच्च । तथा च आम् पचसि पचसि देवदत्तेत्यादौ समुदायस्य पदत्वाभावेन एकान्तरता न स्यादिति द्विःप्रयोगपक्षो दुष्ट एव । यदपि—चिसं तितमित्यादौ द्विःप्रयोगरूपत्वे षत्वप्राप्तिरिति आदेशरूपः प्रत्ययावयवश्च यः सकार इति वैलक्षण्येन

याख्यानमनावश्यकमिति न क्लेश इति, तदपि न; तिसृणामित्यत्र त्ववारणाय तादृशव्याख्यानस्यावश्यंकतया तत्र उभयोस्तारतम्यान-प्रकाशात् । तथा च युक्तिबलात् निर्दुष्टत्वाच्च स्थानेद्विर्वचनत्वमेव युक्तम् ।

यदुक्तम्—एकाज्द्विर्वचनन्यायेन समुदायस्य द्वित्वसिद्ध्या सर्वस्येति पदस्य षष्ठ्याः स्थानार्थकत्वबोधनद्वारा स्थानेद्विर्वचनत्व-पक्ष एव सार्थक्यमिति, तन्न; वृक्षाभ्यामित्यादौ 'स्वादिषु—' इति पदसंज्ञामादाय प्रकृतिभागमात्रस्य द्वित्वे प्राप्ते सर्वावयवेपितस्य द्वित्वमित्यर्थकरणं विना तन्निवृत्त्ययोगेन तादृशार्थबोधनाय तत्सार्थ-क्यात् । यदपि— आम् पचसि पचसि, देवदत्तेत्यादौ पचसि पचसीति समुदायस्य पदत्वाभावेन एकान्तरता न स्यादिति, तदपि न; पचसि पचसीत्यादौ हि स एव धातुः प्रत्ययश्च द्विः प्रयुज्यते । ततश्च यस्माद्विहितस्तदादि तदन्तमिति विधीयमानायाः पदसंज्ञायाः समु-दाये सुलभत्वात् । अत एव सिषेधेत्यादौ 'सात्पदाद्योः' इति षत्व-निषेधो न । उक्तं च भाष्ये—'ताविवेमौ सुप्तिङौ, यौ ततः परौ । सैव च प्रकृतिराद्या । समुदायपदत्वमेतेन' इति । यदपि—तिसृणा-मित्यत्र षत्ववारणाय सिद्धान्तेऽपि 'आदेशप्रत्यययोः' इत्यत्र पूर्वो-क्तरीत्या वैरूप्येण व्याख्यानमावश्यकमिति, तदपि न; तत्र सकारो-च्चारणसामर्थ्यादेव षत्ववारणसंभवेन तादृशव्याख्यानस्य सिद्धान्ते-ऽनुपयोगात् । किंच स्थानेद्विर्वचनपक्षे समुदायस्यैवादेशत्वेन स्थानि-वद्भावेन समुदायस्य पदत्वेऽपि प्रत्येकं पदत्वाभावेन पयः पयः पपीः पपीरित्यादौ 'सोऽपदादौ' 'इणः षः' इति सत्वषत्वे स्याताम् । द्विःप्रयोगपक्षे तु सुपः प्रत्येकमपि विहितत्वबुद्धिसत्त्वेन पदत्वाक्षत्या

न दोष इति द्विःप्रयोगपक्ष एव ज्यायान् ॥

यदुक्तम्—वृक्षाभ्यामित्यादौ प्रकृतिमात्रस्य द्वित्ववारणाय सर्वस्येति चारितार्थमिति, तन्न; सर्वस्येति पदसत्त्वेऽपि सर्वावयवोपेतस्य पदत्वपर्याप्त्यधिकरणस्येत्यर्थसंभवेन प्रकृते दोषस्य दुरुद्धरत्वात्। यदि तु तत्र द्वित्ववारणाय अनभिधानम्, 'सुप्तिङन्तं पदम्' इति पदसंज्ञाविशिष्टस्यैव ग्रहणमिति व्याख्यानं वा आश्रीयते; तर्हि ममापि तावतैवेष्टसिद्धिः। यदपि--तिसृणामित्यत्र सकारोच्चारणसामर्थ्यात् षत्वं नेति तादृशव्याख्यानमनाश्रयणीयमिति, तदपि न: तिस्र इत्यत्र 'न रपर--' इति निषेधेन तत्र सकारोच्चारणस्य चारितार्थ्यात्। एवं च तिसृणामित्यत्र षत्ववारणाय सिद्धान्तेऽपि तादृशं व्याख्यानमाश्रयणीयमिति न तद्विषये गौरवलाघवविचारावकाशः। यदप्युक्तम्—स्थानेद्विर्वचनपक्षे समुदायस्यैव पदत्वेन प्रत्येकं पदत्वाभावेन पयः पयः पपीः पपीरित्यादौ सत्वषत्वे स्यातामिति, तदपि न; 'पाशकल्पककाम्येषु' इति नियमेन तत्र दोषवारणसंभवेन अवयवयोः पदत्वाभावेऽपि क्षतिविरहात्। तथा च सर्वस्येत्युपादानेन स्थानेद्विर्वचनपक्ष एव युक्तः ॥

यदुक्तम्—वृक्षाभ्यामित्यादौ प्रकृतिभागमात्रस्य द्वित्ववारणाय अनभिधानं पूर्वोक्तं व्याख्यानं वा आश्रयणीयमिति सर्वस्येति पदं व्यर्थं सत् स्थानेद्विर्वचनपक्षमेव गमयतीति, तन्न; तादृशव्याख्याने सर्वस्येति पदस्यैव मूलत्वात् तत्सत्त्व एव प्रकृतिप्रत्ययविशिष्टस्य सर्वस्य पदस्य ग्रहणमिति वक्तुं युक्तत्वात्। यदपि—पयः पयः पपीः पपीरित्यादौ 'पाशकल्प—' इति नियमेन सत्वषत्वयोर्वारणसंभवादवयवयोः पदत्वाभावेऽपि न क्षतिरिति, तदपि न; अश्नी-

ताश्नीत इत्यत्र 'अतो गुणे' इति पररूपापत्तेः, अपचन्नपचन् वृक्षान्वृक्षान् अग्रेऽग्रे इत्यादौ ङमुटो णत्वनिषेधस्य पूर्वरूपस्य चाप्रवृत्तिप्रसङ्गाच्च। अत एव 'समुदाये वाक्यपरिसमाप्तिस्तया पदत्वम्' इति भाष्ये उक्तम्। तस्मात् द्विःप्रयोगपक्ष एव युक्तः॥

यदुक्तम्—स्थानेद्विर्वचनपक्षे समुदायस्यैवादेशत्वेन तस्यैव पदत्वेन अवयवानां पदत्वाभावात् अश्नीताश्नीत इत्यदौ पररूपादीनामनापत्तिरिति, तन्न ; सुजन्ते द्विरावृत्त आदेशो भवतीत्यर्थके 'सर्वस्य द्विः' इति वक्तव्ये 'द्वे' इति वचनबलेन अनस्तमितावयवभेदस्य उपस्थितस्थानिसदृशपदसमुदायात्मकस्य आदेशत्वेन स्वत एव अवयवानां पदत्वसत्त्वेन उक्तदोषाणां वारणसंभवात्। समुदायस्य तु स्थानिवद्भावेन पदत्वं सुलभमेव। यदपि— समुदाये वाक्यपरिसमाप्तिस्तया पदत्वमिति भाष्यम्, तदपि तयापि पदत्वमित्येवं व्याख्येयमिति न तद्विरोधः। किंच द्विःप्रयोगरूपत्वे पौनःपुनिकः पौनःपुन्यमित्यत्र समुदायात् ठञ्ष्यञौ न स्याताम्। तत्र हि पुनः पुनर्भवितर्यर्थे वर्तमानात् पुनःपुनश्शब्दात् भवे भावे च प्रत्ययः। यदि द्विःप्रयोगरूपमिदं स्यात्, तर्हि अन्तरङ्गत्वात् सुपि लुक्त्वाच्चाव्ययत्वात्सुपो लुकि वीप्सारूपे अर्थे द्वित्वप्रवृत्त्या 'यत्र संघाते—' इति 'स्वातन्त्र्येण—' इति वा नियमेन समुदायस्य प्रातिपदिकत्वाभावेन तदनुत्पत्तिः स्पष्टैव। आदेशरूपत्वे तु स्थानिवद्भावेन तत् सुलभम्। तत्प्रकृतिकसुबन्तत्वं च समुदायात्सुपा सूपपादम्। वस्तुतस्तु तत्संबन्धिभाव इत्याद्यर्थे प्रातिपदिकात्प्रत्यय इत्येवार्थः। तत्र सति संभवे सुव्व्यवहित एव प्रत्यय इति नात्र सुपोऽपेक्षेति बोध्यम्। कस्कादिषु कौतस्कुतशब्दपाठस्य कृताष्ट-

मिकद्वित्वाद्प्रातिपदिकत्वेऽपि तद्धितोत्पत्तिरिति ज्ञापकत्वापेक्षया स्थानेद्विर्वचनपक्षज्ञापकतैव युक्ता । तस्मात् युक्तिबलात् दोषाभावाच्च स्थानेद्विर्वचनपक्ष एव न्याय्यः ॥



॥ श्रीः ॥

## अम्बार्थनद्योर्ह्रस्वः ॥

अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् संबुद्धौ इति सूत्रार्थः। अम्बार्थानाम् अम्ब इत्यादीनि, नद्यन्तानां गौरि इत्यादीनि च उदाहरणानि । अत्र नद्यन्तानां ह्रस्वे कृते हे गौरि इत्यादौ 'ह्रस्वस्य गुणः' इति गुणो न भवति, ह्रस्वविधानसामर्थ्यात्। अन्यथा हि 'अम्बार्थनद्योर्गुणः' इत्येव ब्रूयात्। न च पदलाघवाभावः, तदभावेऽपि मात्रालाघवानपायात् 'ह्रस्वस्य गुणः' इत्युत्तरसूत्रे गुणग्रहणत्यागेन सुतरां लाघवसद्भावाच्चेति प्राञ्चो व्याख्यातारः। अत्र विचार्यते—

यदुक्तम्— 'अम्बार्थनद्योर्गुणः' इत्येव वक्तव्ये ह्रस्वविधानसामर्थ्यान्न गुण इति, तन्न; प्रकृतपूर्वपक्षप्रतिपादनपरे 'ह्रस्वस्य गुणः' इति सूत्रभाष्ये एवमनुक्तेः, 'अनः क्लीबं जले शोके मातृस्यन्दनयोरपि' इति रभसाद्युक्त्या अम्बार्थके अनःशब्देऽपि गुणापत्तेश्च। इक्परिभाषोपस्थित्या दोषवारणं तु अत्र न संभवति, तथा सति अम्बेत्यादीनामसिद्धिप्रसङ्गात्। किंतु 'ह्रस्वस्य गुणः' इति सूत्रस्थभाष्यरीत्या 'अम्बार्थानां ह्रस्वः' 'ह्रस्वनद्योर्गुणः' इत्येव वक्तव्ये ह्रस्वविधानसामर्थ्यात् न गुण इत्येव व्याख्येयम्। एवं च सति अनः

शब्देऽपि न ह्रस्वप्रसक्तिः, ह्रस्वविधानेन 'अचश्च' इति परिभाषोपस्थित्या अम्बार्थकस्याजन्तस्यैव तद्विधानादिति नव्याः ॥

अत्र प्राञ्चः— यदुक्तम्— 'ह्रस्वस्य गुणः' इति सूत्रभाष्ये नैवं समाहितमिति तथा कथनमसंगतमिति, तन्न; तस्योपलक्षणत्वेनादोषात्। अन्यथा तत्र 'नदीह्रस्वयोर्गुणः' इत्येवोक्ततया 'ह्रस्वनद्योर्गुणः' इति वदतां भवतामपि भाष्यानुक्तवक्तृतापत्तेः। अथ भाष्योक्तप्रकार एव प्रकटीकृतोऽस्माभिः; भवद्भिस्तु नैवमिति चेत्, अस्त्वेवम्; न हि तावता समाधानान्तरं न वक्तव्यमिति सेत्स्यति। अत एव हि तत्र तत्र भाष्यानुक्तमपि व्याख्यातृभिरुक्तं समाधानं संगच्छते। यदप्युक्तम्— अनःशब्दे अम्बार्थके गुणापत्तिरिति, तदप्ययुक्तम्; तस्य क्लीबतया सोर्लुकि संबुद्धिपरकत्वाभावेनैव गुणाप्रसक्तेः। यदपि 'अम्बार्थानां ह्रस्वः' 'ह्रस्वनद्योर्गुणः' इत्येव वक्तव्ये ह्रस्वविधिसामर्थ्यान्न गुण इति, तदपि न; तथा सति 'जसि च' इत्युत्तरसूत्रे ह्रस्वनद्योरित्यस्य अनुवृत्त्यापत्तौ गौर्य इत्यादौ नद्यामपि गुणापत्तेः। तथा च अस्मदुक्तन्यासे न कोऽपि दोषः ॥

अत्र नव्याः—यदुक्तम्—अनःशब्दस्य नपुंसकत्वेन सोर्लुकि संबुद्धिपरकत्वाभावेन न गुणप्रसक्तिरिति, तन्न; सोर्लुक्यपि प्रत्ययलक्षणेन गुणस्य निर्बाधत्वात्। 'न लुमताङ्गस्य' इति तु न, तस्यानित्यत्वेन संबुद्धिगुणविषये अप्रसक्तेः। अत एव वारे वारि इति रूपद्वयमपि संबुद्धौ भवति। यदपि— 'ह्रस्वनद्योर्गुणः' इति न्यासे 'जसि च' इत्युत्तरसूत्रे नदीपदस्याप्यनुवृत्त्यापत्तौ गौर्य इत्यादावपि गुणः स्यादिति, तदपि न; एकदेशानुवृत्त्या इष्टसिद्धेः। तस्मादस्मदुक्तन्यास एव समीचीनः ॥

अत्र प्राञ्चः—यदुक्तम्—संबुद्धिनिमित्तकगुणविषये 'न लुम ताङ्गस्य' इत्यस्यानित्यत्वेनाप्रवृत्त्या सोर्लुक्यपि प्रत्ययलक्षणेन अन शब्दस्य संबुद्धिपरकत्वानपायात् गुणो दुर्वार एवेति, तन्न 'अम्बार्थनद्योर्गुणः' इति न्यासेऽपि नदीसाहचर्येण स्त्रीलिङ्गस्यै वाम्बार्थकस्य ग्रहणेन अनःशब्दे दोषाभावात्। यदपि—एकदेशानुवृ त्त्या गौर्य इत्यादौ न गुणप्रसक्तिरिति, तदपि न; तन्मात्रानुवृत्तं एकदेशे स्वरितत्वप्रतिज्ञाया आवश्यकतया गौरवात्। अत एव अप रितोषात् भाष्ये 'एवं तर्हि योगविभागः करिष्यते— अम्बार्थनद्योर्ह्र स्वः। ततो ह्रस्वस्य ह्रस्वस्य च ह्रस्वो भवति, किमर्थमिदम्। गुण वक्ष्यति। तद्बाधनार्थम्। ततो गुणः। गुणश्च भवति ह्रस्वस्य' इत्यु क्तम्। तस्मादस्मदुक्तो न्यासो निर्दुष्ट एवेति वदन्ति।

अत्र नव्याः— यदुक्तम्— साहचर्यपरिभाषया स्त्रीलिङ्ग स्यैवाम्बार्थकस्य ग्रहणेन न दोष इति, तन्न; एवं सति इगन्तत्वेना साहचर्यस्य ग्रहीतुं शक्यतया अम्बेत्याद्यसिद्धेः। सूत्रं तु मातृशब्दे चरितार्थम्। यदपि— एकदेशानुवृत्तये तन्मात्रे स्वरितत्वप्रतिज्ञाय आवश्यकतया गौरवम्। अत एव भाष्ये समाधानान्तरमाश्रितमिति तदपि न; 'दामहायनान्ताच्च' इत्यत्र 'संख्याव्ययादेर्ङीप्' इति पूर्व सूत्रात् संख्यादेरित्येकदेशानुवृत्तेर्दृष्टतया एकदेशानुवृत्तौ विवादाभा वात्। भाष्ये चोपायस्योपायान्तरादूषकत्वात् समाधानान्तरानुसरण मिति बोध्यम्। अत एव च भाष्ये योगविभागमभिधाय 'अथवा ह्रस्वस्य गुण इत्यत्र अम्बार्थनद्योरित्येतदनुवर्तते' इत्युक्तम्। अन्य था पूर्वस्मिन्पक्षे कं वा अस्वरसं भवन्तो ब्रूयुः। योगविभागस्य गरी यस्त्वमिति तु न ज्याय इत्यन्यत्र स्पष्टम्। तस्मादस्मदुक्तन्यास ए

समीचीन इत्याहुः ।

अत्र प्राञ्चः—यदुक्तम्—साहचर्याश्रयणे इगन्तत्वेनापि तत् ग्रहीतुं शक्यमिति दोषः स्यादिति, तन्न; लक्ष्यानुरोधेनास्मदुक्तसाहचर्यस्यैव आश्रयणीयत्वात्, प्रमाणानामसति बाधके सामान्य एव पक्षपातात् । अत एव 'उलकवतीनां प्रतिषेधः' इति वार्तिकसंगतिः; अन्यथा तद्वैयर्थ्यं स्पष्टमेव । यदपि—मातृशब्दे सूत्रं चरितार्थमिति, तदपि न; 'न ह्येकमुदाहरणम्—' इति न्यायात्, 'मातृनद्योः' इत्येव वक्तव्ये एवमुक्तेर्वैयर्थ्यात्, तत्र 'ऋतो ङिसर्वनामस्थानयोः' इत्येव गुणस्य सिद्धत्वाच्च । किंच अनःशब्दे 'न लुमता—' इति निषेधेन संबुद्धिपरकत्वाभावान्न गुण इत्यपि सुवचम्, स्यानित्यत्वेऽपि लक्ष्यानुरोधेनैव प्रवृत्त्यप्रवृत्त्योर्वाच्यत्वात्, अन्यथा सर्वत्रैव रूपद्वयप्रसङ्गात् । किंच न वयमेकदेशानुवृत्तिः कुत्रापि नास्तीति ब्रूमः । परंतु तावन्मात्रे स्वरितत्वकल्पनया गौरवम् । अगत्या तु तत्र तत्र तादृशः क्लेशः सह्यत इति सत्यामन्यथा गतौ न स आश्रयणीय इत्येव कथयामः । स्पष्टं चेदमभिहितं भवद्भिरेव कृदन्तशेखरे । तस्मादस्मदुक्तो न्यासः सर्वथा निर्बाध इति प्राहुः ॥



॥ श्रीः ॥

## अनुपसर्जनात् ॥

इदं सूत्रं तदन्तविधिज्ञापनद्वारा कौम्भकारेयसिद्ध्यर्थमिति चतुर्थे भाष्ये व्यवस्थापितम् । सर्वादिसूत्रभाष्ये तु 'अनुपसर्जना-

दित्येष योगः प्रत्याख्यायते। तमेवमभिसंभन्त्स्यामः—अनुपसर्जन अ अदिति। अनुपसर्जनस्य अकारात्कारौ द्रष्टव्यौ' इत्युक्तम्। तस्यायं भावः—अनुपसर्जनादिति सूत्रं प्रकारान्तरेण व्याख्यास्यामः। परिभाषेयम्। अनुपसर्जनेति लुप्तषष्ठ्यन्तम्। अश्च अच्चेति समाहारद्वन्द्वः। अकारश्चान्यः प्रश्लिष्यते। स च लुप्तपञ्चम्यन्तः। अकारात्परस्य स्थाने विधीयमानः अकारः अत्कारश्च अनुपसर्जनस्यैवेति नियमोऽनेन क्रियते। तेन त्यदाद्यत्वम् अदड्डादेशश्च उपसर्जनस्य नेति 'संज्ञोपसर्जनीभूताः—' इति वार्तिके उपसर्जनग्रहणं न कार्यमिति। एवं च भाष्यद्वयं परस्परविरुद्धम्। तत्र तदन्तविधिं विनापि कौम्भकारेयस्य सुसाधत्वेन प्रयोजनान्तराभावात्प्रत्याख्यान एव भाष्यतात्पर्यम्, उत तदन्तविधिज्ञापनार्थं तदारम्भे तात्पर्यमिति संशयः। अत्र प्रत्याख्यान एव तात्पर्यमिति प्रथमः पक्षः, नेति सिद्धान्तस्थितिः।

तत्र सूत्रप्रत्याख्यानपक्ष एव युक्तः। तथा हि—अनुपसर्जनात् वक्ष्यमाणाः प्रत्ययाः। अनुपसर्जनीभूतो यो गृह्यमाणाट्टिदादिः, तदन्तात्प्रातिपदिकात् ङीबिति सूत्रार्थः। अत्र गृह्यमाणटिदादेरुपसर्जनत्वमर्थद्वारकं बोध्यम्। अत्र अनुपसर्जनादिति तत्पुरुषः, न तु बहुव्रीहिः, सुपर्णीत्यादौ 'पाककर्ण—' इति ङीपनापत्तेः। तत्पुरुषत्वे तु समुदायस्य उपसर्जनभिन्नत्वेन न दोषः। न च सामर्थ्यादेव तत्र ङीषिति किं तत्पुरुषाश्रयणेनेति वाच्यम्, टिदादीनामनुपसर्जनादिति विशेषणे बहुकुरुचरेत्यत्र टित उपसर्जनरहितत्वेन बहुव्रीहिपक्षे तस्य तद्व्यावर्त्यत्वासंभवेन अधिकारवैयर्थ्यापत्तेः।

न च 'दामहायनान्ताच्च' इति सूत्रे अन्तग्रहणेन हायनान्तस्यापि गृह्यमाणतया द्वौ द्विहायनौ यस्याः सा द्विद्विहायना बालेत्यादौ ङीब्व्यावृत्तये अयमधिकारः। अन्यथा समुदायस्य हायनान्तत्वेन उपसर्जनभिन्नत्वेन च ङीबापत्तिः। बहुव्रीहौ तु हायनान्तस्य बहुव्रीहेः उपसर्जनघटितत्वेन उपसर्जनराहित्यरूपानुपसर्जनत्वाभावान्न दोष इति वाच्यम्, बहुव्रीहौ सर्वत्रैव उपसर्जनघटितत्वेन द्विहायनीत्यत्रापि ङीबनापत्त्या बहुव्रीहिग्रहणसामर्थ्येन अत्र सूत्रे बहुव्रीह्यवयवोपसर्जनतामादाय तन्निषेधाप्रवृत्तेरदोषात्।

न चैवं 'विभाषा सपूर्वस्य' इति सूत्रे सपूर्वग्रहणेन पत्यन्तस्यापि गृह्यमाणतया कर्मधारयोत्तरपदबहुव्रीहौ बहुवृषलपतिः स्त्री इत्यत्र ङीब्व्यावृत्तये सः। अन्यथा पत्यन्तस्य उपसर्जनभिन्नत्वात् ङीबापत्तिरिति वाच्यम्, तथा सति गृहपत्नीत्यत्रापि उपसर्जनीभूतगृहघटितत्वेन ङीबनापत्त्या सूत्रस्यैव वैयर्थ्यापत्तेः। अतोऽत्रापि समासावयवगतोपसर्जनतामादाय निषेधाप्रवृत्त्या अधिकारवैयर्थ्यस्य तादवस्थ्यात्। तस्मात् तत्पुरुष एव। तथा च 'टिड्ढ—' इति सूत्रेण जायमानो ङीप् कुरुचरेत्यत्रैव भवति, न तु उपसर्जनीभूतटिदायन्ते बहुकुरुचरेत्यादावपि॥

स्यादेतत्। कुरुचरीत्यत्रैव ङीप् न प्राप्नोति, किं पुनः बहुकुरुचरेत्यत्र। तथा हि—प्रातिपदिकाधिकारेण टितः प्रातिपदिकस्यैव ग्रहणौचित्येन कुरुचरीत्यत्र 'चरेष्टः' इति सूत्रेण अधिकरणे उपपदे टप्रत्ययस्य प्रवृत्त्या प्रत्ययस्य टित्त्वेऽपि प्रातिपदिकस्य टित्त्वासंभवात्। सूत्रं तु नदी चोरीत्यत्र चरितार्थम्। न च 'अनये अचरितार्थम्—' इति न्यायेन जुगुप्सत इत्यादावात्मनेपदादि-

वत् प्रातिपदिकावयवनिष्ठटित्त्वस्य प्रातिपदिकेऽप्यारोपात् कुरुचरीत्यत्रेवात्रापि ङीपः प्राप्तिरिति वाच्यम्, तथा सति बहुकुरुचरेत्यत्र अनुपसर्जनत्वेन उक्तरीत्या टित्त्वेन च ङीपो दुर्वारतया तस्य तद्व्यावर्त्यत्वासंभवादिति चेत्, नैवम्; 'अवयवे अचरितार्थम्---' इति न्यायेन च यं समुदायं योऽवयवो न व्यभिचरति तत्रैव तादृशावयवगतधर्मारोपो बोध्यते; यथा गोः सक्थिन कर्णे वा कृतं लिङ्गं तत्राचरितार्थं सत् गोरेव व्यञ्जकम् न त्ववयवस्य, तद्वत्। एवं च तदव्यभिचार्यवयवगतधर्मस्य तत्समुदाये आरोपः, न तु तद्व्यभिचार्यवयवनिष्ठधर्मस्यापीति बहुकुरुचरशब्दव्यभिचारितदवयवटप्रत्ययगतटित्त्वस्य बहुकुरुचरेति समुदाये आरोपाभावेन तदन्तविधिं विना तत्र ङीपोऽप्राप्त्या तदन्तविधेश्च 'समासप्रत्ययविधौ प्रतिषेधः' इति निषेधेनाप्रवृत्त्या तस्य तद्व्यावर्त्यत्वासंभवात् तत् व्यर्थं सत् तदन्तविधेर्ज्ञापकम् ॥

ननु यं समुदायं योऽवयवो न व्यभिचरति इत्यनेन स्वाव्यभिचार्यवयवनिष्ठस्य अचरितार्थस्य टित्त्वादिरूपधर्मस्य स्वस्मिन्नारोप इति फलितम्। टप्रत्यये समुदायाव्यभिचारित्वं च समुदायघटकत्वमेव। इत्थं च टप्रत्ययाकारस्य कुरुचरशब्दघटकत्ववत् बहुकुरुचरशब्दघटकत्वस्यापि सत्त्वेन तत्रापि टित्त्वारोपेण ङीपो दुर्वारत्वात् कथमनुपसर्जनाधिकारेण तद्व्यावृत्तिरिति चेत्, न; स्वाव्यभिचारीत्यनेन ग्रन्थेन स्वव्याप्यावयवनिष्ठधर्मस्य स्वस्मिन्नारोप इत्येव बोध्यते, न तु स्वघटकनिष्ठस्यापि। स्वव्याप्यत्वं च स्वासमवायिप्रयोगासमवायित्वे सति स्वसमवायिप्रयोगसमवायित्वम्। अस्ति च कुरुचरशब्दावयवीभूतटकारे कुरुचरशब्दाघटितो यः प्रयोगः—

घट इति, तदसमवायित्वस्य, तत्समवायी यः प्रयोगः बहुकुरुचरेति, तत्समवायित्वस्य च सत्त्वात् कुरुचरशब्दव्याप्यत्वमिति तद्गतटित्त्वस्य तत्र आरोपः। बहुकुरुचरशब्दे तु तदसमवायिकुरुचरशब्दरूप प्रयोगसमवायित्वस्य टप्रत्यये सत्त्वेन निरुक्तद्व्याप्यत्वासंभवात् तत्र न टित्त्वस्यारोप इति तत्र तदन्तविधिं विना ङीपोऽप्राप्त्या तस्य तदन्तविधिज्ञापकता सुस्था। ज्ञापनफलं तु अतिधीवरीत्यादौ ङीप्सिद्धिः। अन्यथा अतिधीवन्शब्दस्य वन्नन्तत्वाभावेन ङीबनापत्तिः। सिद्धान्ते तु वन्नन्तान्तमित्यर्थेन तस्य स्त्रियां वृत्त्या न दोष इति सिद्धान्तस्थितिः॥

अत्रोच्यते——तदन्तविधिज्ञापनार्थमनुपसर्जनाधिकारो मास्तु। अतिधीवरीत्यत्र न दोषः, 'उगितश्च' इत्यत्र उगित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययमात्रग्रहणाभावात् प्रत्ययग्रहणपरिभाषाया अप्रवृत्तिवदत्रापि अप्रवृत्त्या अतिधीवरीत्यत्रापि वन्नन्तप्रातिपदिकत्वेन ङीप्सिद्धेः। न च 'उगितश्च' इत्यत्र 'उगिद्वर्णग्रहणवर्जम्' इति तदन्तविधिप्रतिप्रसवेन तत्र तदन्तविधिसंभवेऽपि 'वनो र च' इत्यत्र 'समासप्रत्ययविधौ प्रतिषेधः' इति तदन्तविधिनिषेधात् तदन्तविधिदुर्लभ इति वन्नन्तात् प्रातिपदिकादित्यर्थो दुर्लभः। सूत्रं तु वनतेः क्विपि विचि वा चरितार्थमिति वाच्यम्, तथा सति वन्रूपात् प्रातिपदिकादित्यर्थापत्त्या प्रत्ययस्य ग्रहणासंभवेन 'वनो न हशः' इति वार्तिकस्यैव वैयर्थ्यापत्त्या तत्सामर्थ्यात् तत्र प्रत्ययग्रहणस्याप्यावश्यकतया तत्र प्रत्ययांशे प्रातिपदिकेनान्वयात् तदन्तविधिना वन्नन्तं प्रातिपदिकमित्यर्थेन धीवरीत्यत्रेव अतिधीवरीत्यत्रापि ङीप्सिद्धेः। एवं च 'टिड्ढ—' इति सूत्रे 'समास—' इति निषेधेन

तदन्तविधेरप्राप्त्या टिदन्तादित्यर्थाभावेन बहुकुरुचरेत्यत्र ङीपः प्राप्तिरेव नेति अनुपसर्जनाधिकारो व्यर्थः॥

यदुक्तम्— 'वनो र च' इत्यादौ प्रत्ययमात्रग्रहणाभावात् 'उगितश्च' इत्यत्रेव प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या अतिधीवरीत्यादौ न दोष इति, तन्न; 'प्रत्ययाप्रत्यययोः—' इति न्यायेन 'यङोऽचि च' इत्यत्र यङ्साहचर्यादचोऽपि प्रत्ययस्यैव ग्रहणवत् ङीप्साहचर्याच्च प्रत्ययस्यैव वनो ग्रहणेन प्रत्ययग्रहणपरिभाषायाः प्रवृत्त्या द्वितीयतदन्तविधिं विना अतिधीवरीत्यस्यासिद्ध्यापत्त्या 'समास—' इति निषेधं बाधित्वा द्वितीयतदन्तविधिसिद्ध्यै सूत्रस्यावश्यकत्वात्

यदुक्तम्—'वनो र च' इत्यत्र 'प्रत्ययाप्रत्यययोः —' इति परिभाषया ङीप्साहचर्येण च प्रत्ययस्यैव ग्रहणेन 'समास—' इति निषेधात् द्वितीयतदन्तविधेरभावात् वन्नन्तान्तमित्यर्थासंभवात् अतिधीवरीत्यसिद्ध्यापत्त्या तत्सिद्ध्यै स्त्रीप्रत्ययेषु तदन्तविधिज्ञापनार्थमधिकार इति, तन्न; 'नित्यं समासे—' इति सूत्रे पदस्येत्यधिकारेण इसन्तपदावयवविसर्गस्यैव षत्वविधानेन परमसर्पिःकुण्डिकेत्यादौ प्रत्ययग्रहणपरिभाषया इसन्तसर्पिश्शब्दस्य 'उत्तरपदत्वे च—' इति निषेधेनापदत्वात् उत्तरपदे षत्वाप्राप्त्या 'नित्यं समासे—' इति सूत्रस्थानुत्तरपदस्थग्रहणेन प्रत्ययग्रहणेषु क्वचिदुपात्तविशेष्यसत्त्वेऽपि शब्दरूपविशेष्याध्याहारेण द्वितीयतदन्तविधिज्ञापनात् अतिधीवरीत्यस्य सिद्ध्या तदन्तविधिज्ञापनार्थमनुपसर्जनाधिकारस्यानावश्यकतया त्वदुक्तप्रयोजनासंभवात् । तस्मात् सूत्रमिदं नारम्भणीयमेव ॥

यदुक्तम्—अनुत्तरपदस्थग्रहणेन प्रत्ययग्रहणेषु क्वचित् द्वितीयतद

नविधिज्ञापनात् वन्नन्तान्तमित्यर्थसिद्ध्या अनुपसर्जनाधिकारस्य तदन्त-
वेधिज्ञापकत्वे प्रयोजनासंभव इति, तन्न; पूर्वं सर्पिः प्रियं यस्येति त्रिपद-
बहुव्रीहौ मध्यमपदे 'उत्तरपदत्वे च' इति निषेधाप्रवृत्त्या इसन्तप-
दावयवत्वेन तत्र विसर्गस्य षत्वव्यावृत्त्या 'अनुत्तरपदस्थस्य' इति निषे-
धस्य चारितार्थ्येन तस्य त्वदुक्तार्थे ज्ञापकत्वासंभवात् । तस्मात
'वनो र च' इत्यत्र तदन्तविधिज्ञापनार्थमनुपसर्जनाधिकार
आवश्यकः ॥

यदुक्तम्— 'नित्यं समासे—' इति सूत्रस्थानुत्तरपदग्रह-
णस्य पूर्वसर्पिःप्रिय इत्यादित्रिपदबहुव्रीहौ मध्यमपदे षत्ववारणाय
चारितार्थ्यात्तस्य वैयर्थ्याभावात् ज्ञापकत्वासंभव इति, तन्न; सूत्रे
समासग्रहणेन पूर्वपदाक्षेपेण इसन्तपूर्वपदावयवस्य विसर्गस्य षत्वमि-
त्यर्थेनैव उत्तरपदे षत्वाप्राप्त्या अनुत्तरपदस्थग्रहणस्य पूर्वसर्पिःप्रिय
इत्यादौ षत्ववारणार्थत्वासंभवेन तस्य ज्ञापकत्वोपपत्तेः । तस्मात्
तदन्तविधिज्ञापनार्थमनुपसर्जनाधिकारो नारम्भणीय एव ॥

यदुक्तम्—समासग्रहणेन पूर्वपदाक्षेपात् अनुत्तरपदसंबन्धि-
विसर्गस्यैव ग्रहणेन उत्तरपदे षत्वाप्राप्त्या अनुत्तरपदस्थग्रहणस्य
तदन्तविधिज्ञापकत्वसंभव इति, तन्न; सूत्रे समासग्रहणेन पूर्वपदा-
क्षेपे परमसर्पिष्प्रिय इत्यादौ त्रिपदबहुव्रीहौ षत्वानापत्तेः । किं च
उणादिषु अव्युत्पत्तिपक्षस्यैव सिद्धान्तितत्वेन इस्त्वादेः प्रत्ययाप्रत्यय-
साधारण्येन तत्र प्रत्ययग्रहणपरिभाषाया अप्राप्त्या परमसर्पिःकुण्ड
इत्यादौ षत्ववारणाय तस्य चारितार्थ्येन तस्य त्वदुक्तार्थे ज्ञापकत्वा-
भावेन अतिधीवरीत्यादेः सिद्ध्यर्थं तदन्तविधिज्ञापनाय अधिकार-

स्यावश्यकत्वात् । तस्मात् तदन्तविधिज्ञापनार्थं सूत्रमारम्भणीयमेव ॥

यदुक्तम्—अतिधीवरी इत्यादिसिद्धये तदन्तविधिज्ञापनार्थमनुपसर्जनाधिकार इति, तन्न; 'वनो र च' इति सूत्रे ङीबनुवादेन रादेशस्यैव विधानेन अस्य प्रत्यविधायकत्वाभावात् । किंच रादेशानुरोधेन वन इत्यस्य षष्ठ्यन्तत्वेन 'ऋन्नेभ्यः—' इति पूर्वसूत्रात् नकारग्रहणानुवृत्त्या वनोऽवयवीभूतो यो नकारस्तदन्तात्प्रातिपदिकात् ङीप् भवति वनश्च रादेश इत्यर्थेन अतिधीवरीत्यस्य सिद्ध्या तदन्तविधिज्ञापनार्थमनुपसर्जनाधिकारस्यानावश्यकत्वात् । तस्मात्सूत्रमनारम्भणीयमेव ॥

यदुक्तम्—'वनो र च' इत्यत्र नकारग्रहणानुवृत्त्या पूर्वोक्तव्याख्यानरीत्या अतिधीवरीत्यादिसिद्धेस्तदन्तविधिज्ञापनार्थमनुपसर्जनाधिकारो नावश्यक इति, तन्न; अस्य तदन्तविधिज्ञापनार्थमनावश्यकत्वेऽपि अन्यार्थं तस्यावश्यकत्वात् । तथा हि—आपिशलिना प्रोक्तम् आपिशालं शास्त्रम्, तदधीते आपिशला ब्राह्मणी । अत्र 'प्रोक्ताल्लुक्' इति अध्येत्रणो लुकि 'यः शिष्यते—' इति न्यायेन प्रोक्ताणन्तस्यैव स्त्रियां वृत्त्या स्त्रियां वर्तमानं यत् अणन्तं तस्मात् ङीबित्यर्थेन अत्रापि ङीप् दुर्वारः । अनुपसर्जनाधिकारे सति तु तस्य गृह्यमाणविशेषणत्वेन अनुपसर्जनीभूतो योऽण् तदन्तात्प्रातिपदिकात् स्त्रियां ङीप् स्यादित्यर्थेन अत्र श्रूयमाणस्य अण उपसर्जनत्वेन ङीपो निवृत्तिः सिध्यति । न च तथाप्यध्येत्रणोऽनुपसर्जनत्वेन प्रत्ययलक्षणेन तदन्ततया ङीप् दुर्वार एवेति वाच्यम्, स्त्रीप्रत्ययप्रकरणे सर्वत्र 'अजाद्यतष्टाप्' इत्यत अत इत्यनुवृत्त्या तदनुरोधेन 'टिड्ढ—' इति सूत्रे 'करपः

इति षष्ठ्यन्ततया टिड्ढादीनामवयवो योऽकारस्तदन्तात् ङीबित्यर्थेन वर्णाश्रये प्रत्ययलक्षणाप्रवृत्त्या तदप्राप्तेः। तस्मादनुपसर्जनाधिकार आवश्यकः ॥.

यदुक्तम्—आपिशला ब्राह्मणीत्यादौ प्रोक्तार्थकाण्निमित्तकङीब्व्यावृत्तये अनुपसर्जनाधिकार आवश्यक इति, तन्न ; ' स्त्रियाम् ' इत्यस्य गृह्यमाणविशेषणत्वेन स्त्रियां वर्तमानो योऽण् तदवयवीभूतो योऽकारस्तदन्तात्प्रातिपदिकात् ङीबित्यर्थेनैव आपिशलेत्यत्र ङीब्वारणसंभवेन तदर्थं तदधिकारानपेक्षणात् । तस्मात्सूत्रं नारम्भणीयमेव ॥

यदुक्तम्—आपिशलेत्यत्र ' स्त्रियाम् ' इत्यस्य गृह्यमाणविशेषणत्वेनैव न दोष इति सूत्रमनावश्यकमिति, तन्न ; काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते काशकृत्स्ना ब्राह्मणीत्यत्र प्रोक्तार्थकस्याणोऽपि स्त्रियां वर्तमानत्वात् स्त्रियामित्यस्य गृह्यमाणविशेषणत्वेऽपि अनुपसर्जनाधिकाराभावे ङीपो दुर्वारत्वापत्तेः। सति त्वस्मिन् प्रोक्ताण उपसर्जनत्वान्न दोष इति सूत्रमिदमारम्भणीयमेव ॥

यदुक्तम्—काशकृत्स्ना ब्राह्मणीत्यादौ प्रोक्ताण उपसर्जनत्वेन तत्र ङीपो निवारणाय अनुपसर्जनाधिकार आवश्यक इति, तन्न; प्रोक्तार्थगतस्त्रीत्वमादाय ङीपः पूर्वमेव प्रवृत्तत्वेन अध्येत्रणो लुका लुप्तत्वेन ' लुक्तद्धितलुकि ' इति ङीपो लुकि पुनः प्रोक्तार्थगतस्त्रीत्वमादाय तदणन्तात् ' लक्ष्ये लक्षणस्य— ' इति ङीपोऽप्राप्त्या तद्वारणार्थमधिकारस्यानावश्यकत्वात् । न च चित्रायां

जाता चित्रेत्यत्रेव काशकृत्स्नेत्यत्रापि अध्ययनकर्तृब्राह्मण्यर्थकस्य प्रोक्ताणन्तमीमांसार्थकशब्दात् भेदेन ङीबापत्तिर्दुर्वारैवेति वाच्यम्, अर्थभेदेन शब्दभेदेऽपि पूर्वत्रेव पुनरपि प्रोक्तार्थगतस्त्रीत्वस्यैव ङीप्प्रवृत्तौ हेतुत्वेन ब्राह्मण्यर्थगतस्त्रीत्वस्य ङीप्प्रवृत्तौ हेतुत्वासंभवेन 'लक्ष्ये लक्षणस्य—' इति न्यायप्रवृत्तेर्दुर्वारत्वात्। चित्रेत्यादौ तु प्रकृतेरैक्येऽपि जातार्थगतस्त्रीत्वस्यैव टाप्प्रवृत्तौ हेतुत्वेन प्रकृत्यर्थगतस्त्रीत्वस्य पुनष्टाप्प्रवृत्तौ अनिमित्तत्वेन ततो वैलक्षण्यस्य सूपपादत्वात्। न चैवमत्र ङीपा व्यवधानात् प्रोक्तार्थकान्तपरत्वाभावात् कथमध्येत्रणो लुगिति वाच्यम्, दारादिक इत्यादौ 'इसुसुक्तान्तात्कः' इति कादेशव्यावृत्तिसिद्धये 'सिद्धश्च प्रत्ययविधौ' इति वार्तिकेन तद्धितविवक्षायामेव पुंवत्त्वप्रवृत्त्या प्रोक्तार्थकाणन्तात्परत्वसंभवेन लुक्प्रवृत्तेः सूपपादत्वात्। तस्मादनुपसर्जनाधिकारो नारम्भणीय एव॥

यदुक्तम्—काशकृत्स्नेत्यादौ लक्ष्ये लक्षणन्यायेन ङीब्वारणसंभवात् अनुपसर्जनाधिकारो नारम्भणीय इति, तन्न; तस्य स्त्रीप्रत्ययेषु तदन्तविधिज्ञापनार्थमेवावश्यकत्वात्। तत्फलं तु कौम्भकारेयसिद्धिः। अन्यथा प्रत्ययग्रहणपरिभाषया कारेत्यस्य अणन्ततया कुम्भकारेति समुदायस्याणन्तत्वाभावेन ततो ङीबभावे विशिष्टात् ढगनापत्त्या तन्निमित्तकादिवृद्धेराकारे प्रवृत्त्या तदसिद्धिः कृद्ग्रहणपरिभाषया तु नात्र निर्वाहः, तस्याः कृन्मात्रग्रहणविषयत्वेन 'टिड्ढ—' इति सूत्रे अणपदेन कृदकृतोरुभयोरपि ग्रहणेन तदप्रवृत्तेः। सति तु तदन्तविधौ समुदायस्याणन्तान्ततया समुदायात् ङीपि ततो ढकि आदिवृद्ध्या तत्सिद्धिः। एवं च कौम्भकारेयसिद्ध्यर्थमनु

मनुपसर्जनाधिकार आवश्यकः ॥

यदुक्तम्— कौम्भकारेय इत्यादौ समुदायात् ङीप्सिद्धये तदन्तविधिज्ञापनाय सूत्रमिदमिति, तन्न ; कारशब्दात् ङीप्यपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन समुदायस्यापि तदन्ततया कुम्भकर्मकोत्पत्त्यनुकूलक्रियाश्रयसंबन्ध्यपत्यविवक्षायां समुदायादेव ढकः प्रवृत्त्या तन्निमित्तादिवृद्धौ तत्सिद्धेः सूपपादत्वेन सूत्रस्यानावश्यकत्वात् ॥

यदुक्तम्— 'स्त्रीप्रत्यये च —' इति तदादिनियमनिषेधात् समुदायस्यापि तदन्ततया समुदायादेव ढकि न दोष इति, तन्न ; 'स्त्रीप्रत्यये च—' इति निषेधेन प्रत्ययग्रहणन्यायव्यावर्तितस्याधिकस्यापि तदन्तत्वं बोध्यते ; न तु कारीशब्दस्यापि तदन्तत्वाभावः । तथा च कुम्भकर्मकोत्पत्त्यनुकूलक्रियाश्रयसंबन्ध्यपत्यविवक्षायां सामान्यत उत्पत्त्यनुकूलक्रियाश्रयसंबन्ध्यपत्यविवक्षाया अप्यनपायात् तस्यापि प्रथमोच्चारितत्वात् अवयवादपि कदाचित् ढगापत्त्या पाक्षिकदोषस्य दुर्वारत्वात् । एकाज्वृद्धिर्वचनन्यायेन तु न निस्तारः, समुदायकार्येण अवयवानामननुग्रहेण तन्न्यायविषयत्वाभावात् । तस्मात् तदन्तविधिसिद्धये सूत्रमावश्यकम् ॥

यदुक्तम्— कारीशब्दस्यापि स्त्रीप्रत्ययान्तत्वानपायात् ततोऽपि कदाचित् ढकि दोष इति, तन्न ; कुम्भशब्देनैकार्थीभूतस्य कारीशब्दस्य स्त्रीप्रत्ययान्तत्वेऽपि निष्कृष्य तावन्मात्रस्यापत्येन योगाभावादवयवात् ढकोऽप्राप्त्या समुदायादेव ढकि तत्सिद्ध्या त्वदुक्त-



दोषानवतारात्। तस्मात्तदन्तविधिज्ञापने फलाभावेन सूत्रं नारम्भणीयम्॥

यदुक्तम्— कारीशब्दस्य निष्कृष्यापत्येनायोगात् न तस्मात् ढगिति, तन्न; कारीत्यस्य निष्कृष्य अपत्येन एकार्थीभावाभावेऽपि समुदायेनैकार्थीभावे नान्तरीयकतया तस्य सत्त्वेन सामर्थ्याक्षतेः। विशिष्टसंबन्ध्यपत्ये विवक्षिते विशेष्यसंबन्धस्याप्यव्याहतत्वात्। अत एव परमगार्ग्यायण इति येनविधिसूत्रस्थं भाष्यं संगच्छते। एवं च अवयवात् ढग्वारणाय तदन्तविधिज्ञापनार्थं सूत्रमिदमावश्यकम्॥

यदुक्तम्— अवयवात् ढग्वारणाय सूत्रमिति, तन्न; केवलकारीशब्दस्य अर्थवत्सूत्रोक्तार्थवत्त्वाभावेन अप्रातिपदिकत्वात् ढकोऽप्राप्त्या समुदायादेव तत्प्रवृत्त्या अवयवात् ढगापत्तेरसंभवात्। अतस्तदन्तविधिज्ञापनार्थं सूत्रमिदं नारम्भणीयम्।

यदुक्तम्— कारीशब्दस्याप्रातिपदिकत्वेन ततो ढगनापत्त्या तदन्तविधिज्ञापने फलाभाव इति, तन्न; तदन्तविधिज्ञापकत्वानङ्गीकारे कारेत्यस्याणन्तत्वेऽपि उक्तरीत्या अप्रातिपदिकत्वात् समुदायस्य प्रातिपदिकत्वेऽपि अणन्तत्वाभावात् समुदायात् ङीपोऽप्रवृत्त्या कौम्भकारेयासिद्धिर्दुर्वारैव। तस्मात् तदन्तविधिज्ञापनार्थं सूत्रमावश्यकम्॥

यदुक्तम्— तदन्तविधिद्वयानङ्गीकारे कारेत्यस्याणन्तत्वेऽपि अप्रातिपदिकत्वात् ङीबनापत्तिरिति, तन्न; अत्र कारशब्दस्य कृदन्तत्वेन तद्धेतुभूतैकार्थीभावस्य तावन्मात्रेऽपि सत्त्वेन तन्मात्रवृत्त्येका-

र्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वस्य तत्र सुवचत्वेन तस्यापि प्रातिपदिकत्वेन ङीबुत्पत्तेः सुवचत्वात्। अत एव भाष्ये अवयवात् टगापादनं संगच्छते। अन्यथा प्रथमोपस्थितत्वेन ङीबनापत्तेरेव वक्तुमुचितत्वेन तदभ्युपेत्य टक्पर्यन्तानुधावनप्रयासस्य असंगत्यापत्तेः। मम तु एकाच्द्विर्वचनन्यायेन समुदायादेव टकि कौम्भकारेयसिद्ध्या सूत्रं नावश्यकम्।

यदुक्तम्— कारेत्यवयवेऽपि अणन्तत्वप्रयुक्तैकार्थीभावस्य सत्त्वेन प्रातिपदिकत्वात् ङीबादिसिद्धिरिति, तन्न; एतादृशे विषये वृत्तिद्वयस्य भिन्नत्वेन तद्धेतुभूतस्यैकार्थीभावस्यापि भिन्नत्वाङ्गीकारे पञ्चगवधन इत्यत्रापि वृत्तिद्वयस्य सत्त्वेन टजन्तस्यापि तत्पुरुषप्रयुक्तैकार्थीभावेन अर्थबोधजनकत्वात् प्रातिपदिकत्वापत्त्या ङीबापत्तेर्दुर्वारत्वात्। मम तु समुदायैकार्थीभावेनैव अवयवयोरपि कार्यसिद्ध्या अवयवमात्रे पृथगेकार्थीभावाभावात् न पञ्चगवधन इत्यत्र ङीप्। एवं कुम्भकारेत्यत्रापि कारेत्यस्यैकार्थीभावेन अर्थबोधजनकत्वाभावात् न ङीबादेः प्राप्तिरिति तदन्तविधिज्ञापनार्थं सूत्रमावश्यकम्॥

यदुक्तम्— समुदायवृत्त्येकार्थीभावस्य अवयवयोरपि नान्तरीयकतया सत्त्वेन तेनैव तत्कार्यसिद्धेः पृथगेकार्थीभावकल्पने न मानम्; अन्यथा पञ्चगवधन इत्यादौ ङीबापत्तिरिति, तन्न; पञ्चगवधन इत्यादौ बहुव्रीह्यर्थं समुदायैकार्थीभावस्य प्रथमं कल्पनीयतया व्यापकेन तदेकार्थीभावेनैव तद्घटकयोरपि कार्यसिद्ध्या पृथक् तत्र तदङ्गीकारे न मानम्। कुम्भकारेत्यत्र तु पूर्वं कृद्वृत्तेरेव वक्तव्यतया व्याप्येन प्रकृतिप्रत्ययपर्याप्तैकार्थीभावेन समासासिद्ध्या तत्पर्याप्तस्य

भिन्नस्य तत्रावश्यकत्वात्। अत एव अवयवात् इगापादनपरं 'येन विधिः—' इति सूत्रस्थं भाष्यं संगच्छेत। तस्मात्सूत्रमिदं नारम्भणीयमेव ॥ *



श्रीः।

## न धातुलोप आर्धधातुके ॥

गुणवृद्धी भवतः सार्वधातुकार्धधातुकपरत्वे इति सामान्यतः प्राप्तौ तन्निषेधार्थं 'न धातु—' इति योगमारभत सूत्रकारः। पचाद्यच्परकयङ्लुगन्तानि लोलुवादीन्युदाहरणानि। अत्र च 'यस्य हलः' इत्यत्र यस्येति योगं विभज्य अत इति चानुवर्त्य लुग्बाधकमतो लोपं विधाय अवशिष्टं च यकारं 'यङोऽचि च' इति लुग्विषयं कृत्वा योगविभागसिद्धाल्लोपस्थानिवद्भावेन गुणातिपत्तिं च व्यावर्त्य लोलुवादिसिद्धिमभिप्रेत्य भगवान् भाष्यकारः सूत्रमिदं प्रत्याख्यत्। पृथगल्लोपस्य स्थानिवद्भाव एव उवङं प्रापयति। तत उत्तरं लघूपधलक्षणं गुणमपि स एव वारयति। अनन्तरमापाद्यमानगुणनिवर्तकस्थानिवद्भावाश्रयणे परमोपकारकमुवङादौ स्थानिद्वारकमनादिष्टादचः पूर्वत्वमशास्त्रीयमपि न पदान्तसूत्रे सवर्णग्रहणमनुगृह्णानः सूत्रकृदेवासाधयत्। तथा वरेग्रहणमाद्रियमाणः स एव यङवयवाकारे यलोपात्पूर्वमेव लुप्यमाने

---

* अत्र प्रतिज्ञोपसंहारयोर्विसंवादो दृश्यते। तेन इतोऽपि कश्या स्यादित्यूह्यते। परं तु एतावानेव भागो बहुत्रोपलभ्यते ॥

प्रत्ययत्वादिकं संभावनाविषयमपि व्यवातिष्ठिपत् । मरीमृज इत्यादौ 'मृजेरजादौ संक्रमे' इत्यादिना प्राप्यमाणवृद्धिविकल्पशङ्काम् अजादावित्यादिग्रहणबललब्धमुख्याजादिपरिग्रहः, व्यवस्थितविकल्पो वा द्रवयति । जङ्गम इत्यादौ 'गमहन—' इत्युपधालोपं च 'अनङि' इति पर्युदासमूलकौपदेशिकाजादित्वमुद्रा विद्रावयति । दरीदृश इत्यत्र 'ऋदृशोऽङि' इति गुणस्यापादयितारं च लक्षणप्रतिपदोक्तपरिभाषा क्षोदयति । देद्य इत्यत्र 'दीङो युट्—' इति युटं च 'श्तिपा शपा—' इति प्राचीनाभ्युपगतपरिभाषा निःसारयति । सनीस्रंसो दनीध्वंसः यायाः वावाः इत्यादौ नलोपाल्लोपौ तु 'संज्ञापूर्वको विधिरनित्यः' इति परिभाषा 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति परिभाषा वा विनिर्गमयतीति सूत्राभिमन्तॄन् हरदत्तादीन् स्थवयित्वा प्रत्याख्यातॄन् भाष्यकारान् अस्त्रजयत् । 'अङ्गवृत्ते—' इत्यादीनां नवीनैरनादरणमपि न संभवति । उभयवादिसंप्रतिपन्नेषु किञ्चिज्जन्यतरपरकयङन्तेषु याया, वावा इत्यादिषु ण्वुल्परकयङन्तेषु दरीदृशक इत्यादिषु चाल्लोपगुणव्यावृत्तये तैरप्युररीकरणीये ते । एवं ह्रासयति अस्मभ्यं युष्मभ्यं द्रवयति स्त्रजयति यशसयति स्थवयति महान्तमाचष्टे महयति यवयतीत्यादिसंप्रतिपन्नोदाहरणान्येव अङ्गवृत्तपरिभाषाद्यनादरणं नवीनानां साहसिकमित्युद्घोषयन्ति । 'ज्यादादीयसः' इति सूत्रीयाद्ग्रहणं च अङ्गवृत्तपरिभाषां ज्ञापयतीत्युक्त्वा 'किमस्य—' इत्यादिना प्रयोजनं विचार्य पिपर्तेर्गुणप्रतिषेधकमपूर्वं वचनं नारम्भणीयमिति प्रयोजनमप्यचकथत् भाष्यकारः । एवं स्वायंभुवादिसिद्धिप्रतिपादकसंज्ञापूर्वकपरिभाषाम् 'ओर्गुणः' इति सूत्रीयगुणग्रहणं बोधयतीति प्रावोचन्नभियुक्ताः । 'ज्ञाजनोर्जा'

'ज्यादादीयसः' इति सूत्रद्वयभाष्योपात्ता अङ्गवृत्तपरिभाषा कथं प्रत्याख्यायताम् । 'शितपा शपा—' इत्यादावपि एषैव रीतिः सुलभा । 'सनीट्प्रतिषेधो वक्तव्यः । बिभित्सति' इत्यादौ दोषोपन्यासवत् यङ्लुकि तदनुपन्यासेन बेभेदितेत्यादियङ्लुगन्त इष्ट एवेति स्पष्टः पन्थाः । तस्मात् स्थवयति दवयति स्रग्विणमाचष्टे स्रजयतीत्याद्यन्यथानुपपत्त्या 'ज्यादादीयसः' इत्याद्ग्रहणबललभ्यामङ्गवृत्तपरिभाषां शरणीकृत्य, बिभेदेत्यादावतिव्यापकं धातुलोप इति तत्पुरुषपक्षेऽपि भेद्यत इत्यादौ णिलोपस्थानिवत्त्वेन गुणनिषेधनिमित्तभूतधात्वंशलोपाभावादेवोपपन्ने गुरुभूतबहुव्रीहिपक्षानुधावनक्लेशावहं याया इत्याद्यन्यथासिद्धकतिपयलक्ष्याभिप्रायकतयाभिमन्यमानं सूत्रं त्यज्यतामिति निरवद्यम् ॥

स्थवयति दवयति स्रजयतीत्यादौ णिजन्ते इष्ठवद्भावेन यणादिलोपे विन्मतोर्लुकि च कृते 'अत उपधायाः' इति वृद्धिप्राप्तौ तद्वारणमङ्गवृत्तपरिभाषैव साधयतीति यदुक्तम्; तन्न संघटते, यणादिलोपस्य स्थानिवद्भावात् इष्ठवद्भावस्य अभावातिदेशपरत्वाभ्युपगमाद्वा वृद्ध्यभावसिद्धेः परिभाषा नारब्धव्येति चेत्, अत्रोच्यते—स्थवयतीत्यादौ यणादिलोपस्य स्थानिवद्भावः स्थानिवत्सूत्रेण वक्तव्यः । वृद्ध्यभावस्य अशास्त्रीयत्वात् तस्मिन् साध्ये स्थानिवत्सूत्रं कथमिवात्मानं दर्शयेत् । अर्थवत्येव स्थान्यादेशभावविश्रान्तिरिति सिद्धान्तिमते तु सुतराम् । स्रजयतीत्यादौ 'लुका लुप्तं न स्थानिवत्' इति कण्ठोक्तो निषेधो जागर्ति । इष्ठवद्भावस्य अशास्त्रीयाभावातिदेशपरत्वमादाय वृद्ध्यभावोपपादनमयुक्ततमम् । यन्निमित्तसद्भावप्रयुक्ता यत्कार्यप्रवृत्तिः, तन्निमित्तवैकल्यसंपादनद्वारा तत्कार्यनि

वृत्तिरूपाभावातिदेशस्य उपपाद्यत्वेऽपि 'अचः परस्मिन्—' इति सूत्रे 'काममतिदिश्यतां वा सच्चासच्च—' इत्यभावातिदेश-प्रापकभाष्यवचनात्र किंचित्पश्यामः। कथंचिदङ्गीकारे 'प्रियस्थिर—' इत्यादिना प्राद्यादेशेषु 'प्रकृत्यैकाच्' इति प्रकृतिभावे प्रेष्ठ इत्यादाविव प्रापयतीत्यादावपि 'अचो ञ्णिति' इति वृद्ध्यभावस्याप्यतिदेशापत्तिः। प्रत्युत अभियुक्तपरिगणितासु पुंवद्भावरभावटिलोपविन्मतुब्लोपप्रस्थस्फाद्यादेशभसंज्ञासु मध्ये अभावातिदेशः कुत्रेत्यन्वेष्यताम्। एवं च अशास्त्रीयाभावातिदेशाङ्गीकारः, सुखेन बहुलक्ष्य-साधनसहायभूतां 'उपाद्यादीयसः' इत्यादिसूत्रधर्मभूतां तत्सूत्रीयाग्रहणमपि प्रयोजनयन्तीमङ्गवृत्तपरिभाषां बाधते; विभेदेत्यादावति-व्यापकबहुतरक्लेशपुरःसरार्थविबोधकधर्मिभूतं 'न धातु—' इति सूत्रं च याया इत्याद्यन्यथासिद्धकतिपयलक्ष्याभिप्रायेण स्थापयतीति चोपपादनं स्वैनैव पर्यालोच्यताम्। 'धर्मिकल्पनातो वरं धर्मकल्पनम्' इति न्यायश्चानुसंधीयताम्। स्रजयतीत्यादौ 'लुका लुप्तम्—' इति स्थानिवत्त्वनिषेधस्य नपदान्तसूत्रे वरे इत्यत्र वरे इति विभागपूर्वकं प्रत्याख्यानमस्तीति यद्यपि चोदनीयम्; तथापि सत्रान्ते श्रूयमाणसप्तम्या अनन्वयापत्तिः। कथंचिदन्वयोपपादनेन आमलक्यां फलं आमलकम् पञ्च इन्द्राण्यः अग्नाय्यो वा देवता अस्य पञ्चेन्द्रम् पञ्चाग्नि इति कतिपयलक्ष्यसाधनेऽपि पञ्चभिः कर्कन्धूभिः, अलाबूभिर्वा क्रीतः पञ्चकर्कन्धूः पञ्चालाबूः, तथा पञ्चभिः श्वश्रूभिर्जितं पञ्चश्वशुरम्, पञ्चभिर्युवतिभिर्दीव्यति पञ्चयुवा इत्यादेरसंग्रहः। सर्वत्र 'द्विगोर्लुगनपत्ये' इति ठको लुकि 'लुक्तद्धितलुकि' इति 'अप्राणिजातेः—' 'श्वशुरस्योकाराकारलोपश्च' 'यूनस्तिः'

इति प्राप्तस्त्रीप्रत्ययभूतोङादिलुकि सति अलाबूकर्कन्धूविषये ऊङः स्थानिवद्भावात् 'गोस्त्रियोः—' इति ह्रस्वापत्तिः । श्वश्रूशब्दे तत्स्थानिवत्त्वेन उकाराकारलोपापत्तिः । युवतिशब्दे स्थानिवत्त्वे नलोपापत्तिश्चेति बहुवैयाकुल्या 'लुका लुप्तम्—' इत्यवश्यमङ्गीकरणीयम् । तस्मात् परिभाषाशरणीकरणं मुख्यमिति सूत्रं त्यक्त्वा सुखं स्थीयताम् ॥

इष्ठवदित्यभावातिदेशाङ्गीकारे 'प्रियस्थिर—' इत्यादिना प्राद्यादेशेषु कृतेषु 'प्रकृत्यैकाच्' इति प्रकृतिभावे प्रेष्ठ इत्यादौ वृद्ध्यभाववत् प्रापयतीत्यादौ 'अचो ञ्णिति' इति प्राप्यमाणवृद्ध्यभावस्याप्यतिदेशापत्तिः । तस्मादभावातिदेशे बाधकसाधकप्रमाणाभावम्, गौरवम्, सूत्राभ्युपगमे बिभेदेत्यादौ अतिव्याप्तिम्, भावमात्रातिदेशे प्रमाणम्, सूत्रप्रत्याख्यानपरभाष्यानुकूल्यम्, लाघवमबाधमिति सहृदयाः पश्यन्तु मध्यस्थाः । ननु बिभेदेत्यादौ कथमनुपपत्तिः? पाठद्वित्वस्य द्विरुच्चारणरूपत्वाभ्युपगमेऽपि समुदाये धातुत्वस्वीकारे भ्वादिपाठाभावेन क्रियावाचकत्वाभावेन च पूर्वभागे तत्स्वीकारे प्रत्ययप्राग्वर्तित्वाभावेन अर्थवत्त्वाभावेन च बाधात् उत्तरखण्ड एव धातुत्वं स्वीकुर्मः । अत्र च 'द्युतेर्दिगि लिटि' इति सूत्रस्थं भाष्यं अस्तेः परत्वात् द्वित्वे ततो भूभावे द्वितीयोच्चारणविषयस्य कृते पूर्वस्य श्रवणं प्राप्नोतीत्याद्यर्थप्रतिपादकं प्रमाणीकुर्मह इति बिभेदेत्यादावपि उत्तरखण्ड एव धातुत्वस्वीकारेण पूर्वखण्डस्थस्य अभ्याससंबन्धिनो हलः 'हलादिः शेषः' इति लोपेऽपितस्य धातुसंबन्धित्वाभावात् 'न धातु—' इति सूत्रस्य व्यापारः क्वेति चेत्, उच्यते— पाठद्वित्वस्य द्विरुच्चारणरूपत्वे स्थानेद्विर्वचनरूपत्वे वा समुदाय एव

धातुत्वमवशेनाप्युररीकरणीयम् । चिचीषति तुतूषतीत्यादौ सन्विशिष्टस्य नटभार्यान्यायेन द्वित्वे प्रकृतिप्रत्ययविभागसंमोहेन प्रत्ययावयवस्य विधीयमानं षत्वं कथमिति चोदनं तु उभयोः समम्; वस्तुतः 'पूर्वत्रासिद्धमद्विर्वचने' इत्यतोऽपि सुपरिहरम् । किंच प्रकृतिप्रत्ययविशिष्टस्य द्विरुच्चारणेऽपि प्रकृत्यंशे प्रकृतित्वग्रहस्य प्रत्ययांशे प्रत्ययत्वग्रहस्य च शुक्लकृष्णरक्तपीततन्त्वारब्धपटे तत्तदंशे तत्तद्बुद्धिवत् किं बाधकमिति सम्यगूह्यताम् । एतेन अत्रैव सन्परत्वबुद्ध्यभावात् 'अज्झनगमां सनि' इति दीर्घत्वं न प्राप्नोति । तथा जुहूषतीत्यादौ 'ह्वः संप्रसारणम्' इति संप्रसारणाप्राप्तिः। एवं यियक्षतीत्यत्र 'सन्यतः' इति इत्वं न सिध्यतीत्यादिदूषणानि दूरापास्तानि । वस्तुतस्तु परभागे धातुत्वस्वीकारे सिषेच सिषेवे सिषेध इत्यादावुत्तरखण्डस्य तिङन्तत्वात् 'सुप्तिङन्तं पदम्' इति पदत्वात् 'सात्पदाद्योः' इति निषेधापत्तिः । तथा अभिसुषाव इत्यादौ 'उपसर्गात्सुनोति—' इत्यादिना धात्ववयवस्य विधीयमानं षत्वमाशङ्क्य 'स्थादिष्वभ्यासेन —' इति नियमपराभियुक्तग्रन्थाः कुप्येयुः । किंच उत्तरखण्डस्यैव तिङन्तत्वेन समुदायस्यातिङन्तत्वात् देवदत्तः पपाच व्रजतीत्यादौ 'तिङतिङः' इति निघातापत्तिः, पदत्वेन व्यवहारानापत्तिश्च । 'लिटि धातोः—' इत्यत्र अनभ्यासग्रहणवैयर्थ्यापत्तिश्च । प्रत्युत 'आगन्तूनामन्ते निवेशः' इति न्यायेन द्वितीयोच्चारणस्यैव विधेयत्वात् प्रथमभाग एव धातुत्वे स्वीकृते तु सिषेचेत्यादावनुपपत्तिलेशोऽपि नेति वैपरीत्यमपि सूपपादम् । 'इयतेर्दिगि—' इति सूत्रभाष्यं तु 'आर्धधातुके' इत्यस्य परसप्तमीत्वमभ्युपगम्य प्रोक्त्यानुवृत्तम्, विषयसप्तमीत्वेनाप्युपपत्तेः । तस्मान्मध्यस्थदृष्ट्या अङ्गत्वा

दिवन् धातुत्वादिकमपि समुदाय एवेति नात्र कश्चन भर इति विभेद-त्यादौ अतिव्याप्त्युपपादनं संगतमेवेति तदुपपादकं बहुदोषदुष्टं मन्त्र त्यक्त्वा याया इत्यादिकतिपयलक्ष्याणि परिभाषयैव प्रसाध्य सुखमा-स्वम्। अहमपि निर्भरो वर्ते ॥



॥ श्रीः ॥

## इको झल् ॥

इकः, झल्, इति द्विपदमिदं सूत्रम्। 'रुदविदि—' इत्य तः सन्पदमनुवर्तते। सन्पदेन आक्षिप्तो धातुरिक्पदेन विशेष्यते तेन तदन्तविधिः। तथा चायं सूत्रार्थः—इगन्तात् धातोः परो झलादि सन् कित्स्यादिति। उदाहरणम्— चिचीषति, तुष्टूषति, चिकीर्षती त्यादि। अत्र च चेतुमिच्छतीत्यादिविग्रहे 'धातोः कर्मणि—' इति सनि 'एकाचः—' इति इडभावे 'अज्झनगमां सनि' इति दीर्घे द्वित्वे अभ्यासकार्ये सन्प्रत्ययस्य आर्धधातुकत्वात् 'सार्वधातुक—' इति गुणे प्राप्ते अनेन किद्वद्भावविधानात् 'क्ङिति च' इति निषेधान्न भवति। इक इति किम्— पिपासतीत्याकारान्तात् सनः कित्त्वं न भूत्। सति तु कित्त्वे 'घुमास्था—' इति ईत्वं स्यात्। झलिति किम्-शिशयिषते। अत्र सति तु कित्त्वे गुणो न स्यात्।

नन्विदं सूत्रमनारम्भणीयम्। चिचीषतीत्यादौ प्रकारान्तरे णापि गुणाभावस्य सिद्धत्वात्। तथा हि— चिनोत्यादिभ्यः सन्प्र

त्यये कृते 'सार्वधातुकार्धधातुकयोः' इति गुणस्यापि प्राप्तिरस्ति; 'अज्झनगमां सनि' इति दीर्घस्यापि प्राप्तिरस्ति। तत्र येन नाप्राप्तिन्यायेन नाप्राप्ते गुणे आरभ्यमाणेन दीर्घविधिना गुणस्य बाधितत्वात् गुणाभावः सिद्ध इति सूत्रमिदमनावश्यकमिति चेत्, न; येन नाप्राप्तिन्यायेन निरवकाशत्वेन ह्रस्वान्तस्य गुणं बाधित्वा दीर्घशास्त्रे प्रवृत्तेऽपि दीर्घान्तस्यापि इगन्तत्वात् गुणः प्राप्नोतीति तन्निषेधार्थं किन्त्वस्य आवश्यकत्वात्। न च दीर्घविधानं व्यर्थमिति वाच्यम्, अनिगन्तेषु चरितार्थत्वात् शास्त्रप्रवृत्तेर्जपादिवद्धर्मसाधनत्वात्।

ननु नैतदस्ति प्रयोजनम्, दीर्घशास्त्रारम्भसामर्थ्यादेव दीर्घान्तस्य गुणाभावसिद्धेः। न च अनिगन्तेषु चरितार्थत्वम्, दीर्घशास्त्रप्रयोजकानिगन्ताभावात्। तथा हि— अकारान्तेषु अतो लोपेन भाव्यम्। आकारान्तेषु एजन्तेषु च कृतात्वेषु दीर्घे सत्यसति च विशेषाभावः। न च शास्त्रप्रवृत्तिमात्रं जपादिवद्धर्मसाधनम्, शास्त्रप्रवृत्तिपूर्वकप्रयोगस्यैव 'एकः शब्दः—' इत्यादिना धर्मसाधनत्वावगमात् इह दीर्घान्तस्य प्रयोगाभावेन धर्मसाधनत्वस्य दुरुपपादत्वात्। अतो दीर्घविधानसामर्थ्यात् गुणो बाध्यत इति न तन्निषेधाय सूत्रमारम्भणीयमिति चेत्, न; 'सनि मीमा—' इत्यत्र मीग्रहणेन मिनोतिमपि ग्राहयित्वा दीर्घः कृतार्थ इति तस्य सामर्थ्याभावेन दीर्घविधानसामर्थ्यात् गुणो बाध्यत इति वक्तुमशक्यतया चिचीषतीत्यादौ कृते दीर्घे पश्चाद्गुणप्रवृत्त्यापत्तेः।

ननु नैतदस्ति। मिनोतेर्दीर्घाभावेऽपि तत्र 'मीनातिमिनोति—' इति सूत्रेण आत्वे 'गामादाग्रहणेष्वविशेषः' इति माग्रहणेनैव

तस्यापि ग्रहणसंभवेन तदर्थं दीर्घविधानमनावश्यकमेव। तथा च दीर्घविधानसामर्थ्यात् गुणो बाध्यत इति तन्निषेधाय सूत्रं नारम्भणीयमिति चेत्, न; निनीषति, बुभूषति, तितीर्षतीत्यादौ गुणनिषेधार्थं किन्त्वस्यावश्यकत्वात् । न च तत्रापि दीर्घविधानसामर्थ्यात् गुणाभाव इति वाच्यम्, दीर्घरूपसंपत्तिफलकस्य दीर्घशास्त्रस्य प्रागसिद्धदीर्घरूपेषु ह्रस्वान्तेष्वेव प्रवर्तनात् दीर्घान्तेषु प्रागेव सिद्धदीर्घरूपेषु फलाभावादप्रवर्तनात् सामर्थ्याभावात् । न हि भुक्तवान् पुनर्भुङ्क्ते, न वा कृतश्मश्रुः श्मश्रूणि कारयति । अकृतकारि खलु शास्त्रम् अग्निवत् । तद्यथा— अग्निर्यददग्धं तदेव दहति, दग्धं पुनर्न दहति अयोग्यत्वात् । एवमिहाप्ययोग्यत्वात् दीर्घान्तधातुषु दीर्घशास्त्रस्य अप्रवृत्त्या गुणप्राप्तौ तद्वारणायेदं सूत्रमावश्यकमेव ।

ननु नैतदस्ति प्रयोजनम्; दीर्घान्तेष्वपि दीर्घशास्त्रं प्रवर्तत एव, दीर्घरूपसंपत्तिरूपफलाभावेऽपि दीर्घरूपप्रतिबन्धकगुणाप्रवृत्तिरूपप्रयोजनसद्भावात्, इष्टप्राप्तिवदनिष्टनिवृत्तेरपि फलत्वात् । अत एव सम्राडित्यत्र 'मो राजि—' इति मकारस्य पुनर्मकारोऽनुस्वारनिवृत्तये विधीयते । लोके च पुनः प्रवृत्तिर्दृश्यते प्रयोजनविशेषसद्भावे भुक्तवानपि हि पुनर्भुङ्क्ते दधि खलु भविष्यति पयः खलु भविष्यति दध्ना खलु भुञ्जीय पयसा खलु भुञ्जीयेति । कृतश्मश्रुरपि श्मश्रूणि कारयति शिल्पविशेषात् । कृतकारि खल्वपि शास्त्रं भवति पर्जन्यवत् । तद्यथा— पर्जन्यो हि सजलेऽपि स्थले वर्षति अतो दीर्घान्तेष्वपि दीर्घशास्त्रप्रवृत्त्या गुणस्य बाधितत्वात् गुणनिषेधाय सूत्रमनारम्भणीयमिति चेत्, न; यदि दीर्घशास्त्रारम्भसामर्थ्यादविकृतेन दीर्घेण स्थातव्यमिति दीर्घरूपप्रतिबन्धको गुणो बाध्येत

तर्हि चिकीर्षतीत्यादौ दीर्घे कृते प्राप्यमाणम् 'ऋत इद्धातोः' इति इत्वं च दीर्घरूपप्रतिबन्धकत्वात् बाध्येत । अतः प्रतिबन्धकनिवृत्ति-र्दीर्घविधेर्न प्रयोजनमिति ऋत इत्ववत् गुणस्यापि प्राप्तिरस्तीति गुण-निषेधाय सूत्रमारम्भणीयमेव ।

ननु नैतदस्ति । प्रतिबन्धकनिवृत्तिरपि दीर्घविधेः प्रयोजन-मेवेति गुणो बाधिष्यते । न चैवम् ऋदित्वस्यापि बाधप्रसङ्गः, तदा-श्रयत्वेन विशेषसद्भावात् । तथा हि— यद्यन्तरेण दीर्घविधानं चि-कीर्षतीत्यादौ गुणः ऋदित्वं च प्राप्नुयात् तदा तद्वदेव बाध्येत । यतस्तु खलु दीर्घाश्रयमेव ऋदित्वम्, तदा तदेव दीर्घविधेः फलं सं-जातमिति ऋदित्वं प्रवर्तिष्यते । तथा चोक्तम्— 'यं विधिं प्रत्युपदे-शोऽनर्थकः, स विधिर्बाध्यते । यस्य तु विधेर्निमित्तम्, नासौ बाध्यते' इति । तथा च दीर्घशास्त्रेण गुणस्य बाधितत्वात् गुणाभावाय सूत्र-मिदमनारम्भणीयमिति चेत्, न; ऋदित्वस्य गुणापेक्षया नास्ति वि-शेषः, दीर्घशास्त्रनिमित्तकत्वाभावात् । न हि सर्वत्र दीर्घशास्त्रेणैव दीर्घरूपता संपादनीयेति नियमः, स्वभावत एव ॠदन्तानाम् 'तॄ प्लवनतरणयोः' इत्यादीनां संभवात् । तत्र च ऋदित्वस्य सावकाशत्वात् । अतो दीर्घशास्त्रमन्तरेणापि प्रवर्तमानस्य ऋदित्वस्य न दीर्घशास्त्रनिमि-त्तत्वम् । नहि तदभावेऽपि प्रवर्तमानस्य तन्निमित्तकत्वमुचितमिति दीर्घशास्त्रानिमित्तकत्वाभावात् 'यं विधिम्—' इति न्यायानवतारा-दित्वगुणयोस्तौल्यात् बाधः स्यात् । अतः प्रतिबन्धकनिवृत्तिर्दी-र्घविधेर्न प्रयोजनमित्येव कल्पनीयम् । तथा च इत्ववत् गुणस्यापि प्राप्तौ तन्निषेधाय सूत्रमारम्भणीयमेव ।

ननु नैतदस्ति । सर्वत्र दीर्घशास्त्रेणैव दीर्घरूपता संपादनीया। स्वभावत ऋकारान्तेष्वपि तितीर्षतीत्यादिषु दीर्घशास्त्रमन्तरेण दीर्घरूपता न संभवत्येव । 'इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन' इति गुणेन दीर्घरूपहानिप्रसङ्गात् गुणबाधनार्थं दीर्घविधेरवश्यापेक्षणीयत्वात् । अतो दीर्घशास्त्रनिमित्तकत्वेन ऋदित्वस्य गुणापेक्षया विशेषसद्भावात् 'यं विधिम्—' इति न्यायेन गुण एव बाध्येत, न ऋदित्वमिति गुणनिषेधाय सूत्रं नारम्भणीयमिति चेत्, न; चिचीषतीत्यादौ कित्त्वमन्तरेण गुणाभावे सिद्धेऽपि ज्ञीप्सतीत्यत्र णिलोपसिद्ध्यर्थं कित्त्वस्य वक्तव्यत्वात् ।

न च वाच्यम्—कास्ताः, क्व निपतिताः । क्व कित्त्वम्, क्व णिलोपः । को वाभिसंबन्धः—इति । स एषोऽभिसंबन्धः—यत्सति कित्त्वे सावकाशं दीर्घत्वं णिलोपो बाधते । असति पुनर्न बाधते । क्व ? कित्त्वानारम्भे ज्ञीप्सतीत्यत्र ज्ञेः सनि 'सनीवन्तर्ध—' इति इडभावे 'आप्ज्ञपि—' इति ईत्वे 'अत्र लोपः—' इत्यभ्यास लोपे सति ज्ञीपि स इति स्थिते गुणो णिलोपो दीर्घत्वं चेति त्रीणि कार्याणि प्राप्नुवन्ति । तत्र यथा अनवकाशेन दीर्घेण गुणो बाध्यते, एवं णिलोपोऽपि बाध्येत, विशेषाभावात् । कित्त्वारम्भे तु चिचीषती-त्यादौ सावकाशं दीर्घत्वं णिलोपेन बाध्यत इति णिलोपे सति ज्ञीप्सतीति रूपं सिध्यति । अतो णिलोपसिद्ध्यर्थं कित्त्वं वक्तव्यमिति सूत्रमारम्भणीयमेव ।

ननु नैतदस्ति । कित्त्वानारम्भेऽपि णिलोपः सिध्यति । तथा हि— ज्ञीपि स इति स्थिते त्रयाणां प्राप्तावपि अनवकाशेन दीर्घेण

गुण एव बाध्यते, येन नाप्राप्तिन्यायात् दीर्घविषये सर्वत्र गुणस्य प्राप्तत्वात् । णिलोपस्तु तच्चित्प्राप्तत्वात् न बाध्यते । गुणबाधनेन चरितार्थं च दीर्घशास्त्रं परत्वाण्णिलोपेन बाध्यत इति णिलोपस्य सिद्धत्वात् न तदर्थं सूत्रमारम्भणीयमिति चेत्, न; अत्र तावत्पक्षद्वयम्— बाध्यसामान्यपक्षो विशेषपक्षश्चेति । तत्र बाध्यसामान्यचिन्तापक्षे दीर्घशास्त्रेण स्वविषये प्राप्तविधिमात्रस्य बाधात् गुणस्येव णिलोपस्यापि बाधः प्रसज्येत । बाध्यविशेषचिन्तापक्षे हि येन नाप्राप्तिन्यायं बाधित्वा 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान्' इति पुरस्तादपवादेन दीर्घशास्त्रेण अनन्तरस्य णिलोपविधेरेव बाधः स्यात्, न तूत्तरस्य गुणविधेरिति णिलोपो न स्यात्, गुणश्च स्यादिति णिलोपसिद्ध्यर्थं कित्त्वमावश्यकमिति सूत्रमारम्भणीयमेव ।

ननु नैतदस्ति । दीर्घस्यापवादत्वमेव नास्ति, सावकाशत्वेन निरवकाशत्वाभावात् । तथा हि— 'कुङ् शब्दे' 'गु पुरीषोत्सर्गे' 'ध्रु गतिस्थैर्ययोः' इत्येतेभ्यः सनि चुकूषते जुगूषति दुध्रूषतीत्यत्र 'गाङ्कुटादिभ्यः—' इति सनो ङित्त्वात् गुणनिषेधे दीर्घशास्त्रस्य अवकाशः संभवत्येवेति अपवादत्वाभावात् णिलोपः परत्वाद्दीर्घशास्त्रं बाधते; 'ण्यल्लोपावियङ्—' इति वचनाच्च गुणशास्त्रं बाधत इति ज्ञीप्सतीति रूपस्य निर्बाधत्वात् णिलोपसिद्ध्यर्थं सूत्रमनारम्भणीयमिति चेत्, न; यदि अज्ग्रहणस्य धातुत्रय एवावकाशः स्यात्, तर्हि 'कुगुध्रुहनगमां सनि' इत्येव ब्रूयात्; प्रत्याहारग्रहणं न कुर्यात्, वर्णमात्रापेक्षया प्रत्याहारग्रहणमेव गुरुभूतमिति 'कस्चानुप्रयुज्यते इति कभित्ति वा ब्रूयात्' इति मूलव्याख्यानावसरे व्याख्यातृभिरुक्तत्वात् । यद्वा 'उहनगमां सनि' इत्येव वदेत् । तावताप्युक्तस्थले इष्टसिद्धेः ।

न च 'गमेरिङादेशस्य' इति वार्तिके प्रत्याख्यातुं तन्त्रादिना संभव-व्यभिचाराभ्यां गमेरचा विशेषयिष्यमाणत्वात् तदर्थमज्ग्रहणमावश्यकमिति वाच्यम्, एवमपि 'उतः सनि' 'इङ्हनोः' इति सूत्रयितुं शक्यत्वात् । इणिकोरादेशस्यापि ग्रहणमिति पक्षेऽपि 'इहनोः' इति सुवचम्, हना साहचर्यात् इधातुरेव ग्रहीष्यते न तु इवर्णान्त इति व्याख्यातुं शक्यत्वात् । यद्वा यथान्यासेऽपि हनिसाहचर्यात् लुग्विकरणस्य आदेशगमेर्ग्रहणं संभवत्येव । किंच कुटादौ 'कुङ्शब्दे' इति ह्रस्वान्तस्य पाठ एव नास्ति, दीर्घान्तस्यैव पाठात् । अत एव लोकवेदयोराकृतिशब्द एव प्रयुज्यते । ततश्च 'अज्झन—' इति प्रत्याहारेण दीर्घविधेरनवकाशत्वात् अपवादत्वात् 'पुरस्तात्—' इति न्यायेन णिलोपो न स्यात्, गुणश्च स्यादिति णिलोपसिद्ध्यर्थं गुणनिषेधार्थं च सूत्रमारम्भणीयमेव ॥



॥ श्रीः ॥

## इको यणचि ॥

अत्र सूत्रे अचीति पदं मास्तु, ज्ञापकबलादेव हरति यातीत्यादौ यणभावसिद्धेः । तथा हि—चेता स्तोतेत्यादौ इटं वारयितुं 'एकाच उपदेशे—' इत्यारब्धम् । यदि हलि परतोऽपि यण् स्यात् तर्हि इटो यणादेशे वलिलोपे चेष्टसिद्धिरिति तदर्थमिदं वचनं नारम्भणीयम् ।

भवितेत्यादावप्युक्तरीत्या इटोऽश्रवणप्रसङ्गादिडागमविधान-सामर्थ्यात् यण् न भवतीत्यवश्यमभ्युपगन्तव्यम् । तथा च 'एकाचः—' इति सूत्रं तदर्थमावश्यकमिति उक्तज्ञापकत्वं न युक्तम् ।

'इट ईटि' इति सलोपो येन नाप्राप्तिन्यायेन यणोऽपवादः, संयोगान्तलोपसंयोगादिलोपयोरिव विषयभेदेऽपि उत्सर्गापवादभाव स्यावर्जनीयत्वात् । तथा च अचेतीदित्यादौ इडागमशास्त्रं लब्धाव-काशमिति न तत्सामर्थ्यात् यण् बाध्यत इति पूर्वोक्तज्ञापकत्वं सुस्थम् ।

यदि सिज्मात्रमिटोऽवकाशः स्यात्, तर्हि 'इट्सिचः' इत्येव ब्रूयात् । तथा अनुक्त्वा आर्धधातुकस्येति सामान्यतः सूत्रं प्रणयत आचार्यस्य वलाद्यार्धधातुकमात्रे इड्विधानसामर्थ्यात् यण् बाध्यत इत्येवाशयो वर्णनीयः । तथा च पूर्वोक्तरीत्या ज्ञापकत्वासंभवः ।

'इट् सिचः' इति न वक्तुं शक्यम् । ग्रहीता ग्रहीष्यती-त्यादेरसिद्धिप्रसङ्गात् । न च तत्रापि उक्तरीत्या यणि वलिलोपे गुरु-शरीरसूत्रप्रणयनवैयर्थ्यमेवेति वाच्यम्, तत्र यणपवादस्य 'ग्रहो लिटि—' इति दीर्घस्य प्राप्तत्वात् । तथा च ग्रहीतेत्याद्यर्थं गुरु-शरीरं सूत्रमावश्यकमिति न तद्विधानसामर्थ्यात् यण्बाधसंभवः ।

'इट् सिचः' 'आर्धधातुकस्य वलादेर्ग्रहः' 'अलिटि दीर्घः' इति न्यासाश्रयणेन अचेतीत् ग्रहीता ग्रहीष्यतीत्यादिसिद्धौ तथाविध-न्यासमनादृत्य 'आर्धधातुकस्य—' इति पठत आचार्यस्य भवितेत्या-

दौ इटः श्रवणमावश्यकमित्यभिप्रायो विज्ञायते । ततश्च इड्विधान-सामर्थ्यात् यण् बाध्यत इति न पूर्वोक्तं ज्ञापकं सम्यक् ।

'आर्धधातुकस्य वलादेर्ग्रहः' इति न सूत्रयितुं शक्यम्, वरीता तरीतेत्याद्यसिद्ध्यापत्तेः; ग्रहेरेव इड्विधानाङ्गीकारात् वृञस्त-रतेश्च इट एवाभावात्; 'वॄतो वा' इति यणपवाददीर्घेण यथाश्रु-तन्यासाङ्गीकर्तृमते निरुक्तरूपसिद्धिसंभवात् ।

'वॄतो वा' इति इटो दीर्घविधानसामर्थ्यात् वरीतेत्यादौ इटः सिद्धिः । तथा च पूर्वोक्तं ज्ञापकं दुर्वचम् ।

'आर्धधातुकस्य वलादेर्ग्रहः' इति न्यासाश्रयणे शेकिथ पेचिथेत्यादेरसिद्धिप्रसङ्गात् 'थलि च सेटि' इति सूत्रं निर्विषय-मेव स्यात् । यथाश्रुतन्यासे तु यणपवाद एत्वाभ्यासलोप इति निरु-क्तलक्ष्यसिद्धिरप्रत्यूहा । इत्थं च प्रागुक्तं लिङ्गं सुवचम् ।

'दीर्घोवेत्रीटाम्' इति सूत्रप्रत्याख्यानाय इट् इडेव भवति न तु विक्रियत इति भाष्ये व्याख्यातम् । तथा च गुणवृद्ध्योरप्य-प्राप्त्या वलि लोपासंभवेन चेता स्तोतेत्यादिसिद्धये 'एकाचः—' इति सूत्रमावश्यकमिति तस्य हलि परतो यणभावज्ञापकत्वं न संभवति ।

इट् इडेवेत्यङ्गाधिकारे क्रियमाणो नियम आङ्गमेव गुणरूप विकारं व्यावर्तयति, न त्वनाङ्गम्; अन्यथा पिपठीरित्यादौ दीर्घा-नापत्तेः । स्पष्टं चेदं तत्रैव भाष्ये । एवं च इटोऽनाङ्गयणादेर्-बाधकाभावेन प्रागुक्तं लिङ्गं सुस्थमेव ।

'एचोऽयवायावः' इत्युत्तरार्थं स्पष्टप्रतिपत्तये इहैव कृतम् ।

ओदौतोः प्रत्ययस्थयकारे परत एव वान्तादेशो नान्यत्रेति नियमपरतया 'वान्तो यि प्रत्यये' इति सूत्रं व्याख्यायते । अतो नातिप्रसङ्गः । 'एङ् ह्रस्वात्—' इति सूत्रे प्रत्याहारग्रहणस्य हरे इत्यादौ संबुद्धिलोपः प्रयोजनम् । यदि हलि परतोऽपि एकारस्य अयादेशः स्यात्, तर्हि वलि लोपात् ह्रस्वात्परत्वेनैव लोपः संभवति; यदि वा परत्वाद्धलिलोपं बाधित्वा हल्ङ्यादिना सुलोपः; तदा प्रत्याहारग्रहणं व्यर्थम् । अतो ज्ञायते—एकारस्याचि परतोऽयादेश इति । अत एव एत्येधतीति सूत्रे एजादित्वविशेषणं संगच्छते । देविकायां भवं दाविकमित्यादिसिद्धये 'देविकाशिंशपा—' इति सूत्रेण आदिवृद्ध्यपवाद आकारो विहितः । यदि हलि परतोऽपि ऐकारस्य आयादेशः स्यात्, तर्हि आयादेशे वलि लोपे च दाविकमिति सिद्धमिति वृद्धिबाधनार्थमात्वविधानमनर्थकम् । अतो ज्ञायते— आयादेश ऐकारस्याचि परत एव भवतीति । अत एव 'अनुवादे चरणानाम्' 'धातोस्तन्निमित्तस्यैव' 'वोतो गुणवचनात्' 'संबुद्धौ शाकल्यस्य—' इत्यादिसौत्रनिर्देशाः संगच्छन्ते । तस्मात् 'एचोऽयवायावः' इत्येतदर्थमज्ग्रहणं न कर्तव्यम् ।

एवमपि 'आद्गुणः' इत्यत्रानुवृत्त्यर्थमज्ग्रहणमावश्यकम् ।

एतदपि न साधीयः, 'दिव औत्' इति ज्ञापकेनैव अतिप्रसङ्गवारणसंभवात् । तथा हि—'दिवोऽम्' इत्यमागम एव विधीयताम् । तथा च दिव् स् इति स्थिते अमागमे कृते द्यव् इति भवति । यदि हलि परतोऽपि गुण एकादेशः स्यात्, तर्हि अमागम-

वकारयोरान्तरतम्यादोकाररूपे गुणे 'ओतो णिदिति वाच्यम्' इति वार्तिकेन णिद्वद्भावात् आदिवृद्धौ च द्यौरिति रूपसिद्धौ किमौत्वविधानेन। तस्मात् हलि परतो न गुण इति ज्ञायते।

'ओतो णित्' इति वार्तिकव्याख्यानावसरे 'विहितविशेषणान्नेह—हे भानो भानवः' इति कौमुद्यादिषु व्याख्यातम्। तत् कथमुक्तदिशा अमागमविधानेन द्यौरिति रूपसिद्धिः?

'पुंसोऽसुङ्' इत्यत्रेव सौ विवक्षिते अमागम इति व्याख्यानान्नानुपपत्तिः॥

अथात्र इग्ग्रहणं व्यर्थम्, 'दीर्घात्' इत्यतो दीर्घग्रहणस्य 'ह्रस्वस्य पिति--' इत्यतो ह्रस्वग्रहणस्य चानुवृत्त्या ह्रस्वदीर्घयोर्यण्विधानेनेष्टसिद्धेः। प्लुतस्य तु प्रकृतिभावेन भवितव्यम्।

न च 'दीर्घात्' इति पञ्चम्या अचीति सप्तम्याः षष्ठीप्रकल्पनापत्तिः, 'सेनासुरा—' इति ज्ञापकेन दीर्घादिति पञ्चम्याः षष्ठ्यर्थकत्वस्य क्लृप्तत्वात् तस्यैवानुवृत्त्या दीर्घस्येत्यर्थलाभसंभवात्।

न च 'पदान्ताद्वा' इत्यत्र ह्रस्वस्येत्यस्यापि संबन्धेन दधि च्छादयतात्यत्र तुग्विकल्पापत्तिरिति वाच्यम्, ह्रस्वस्येत्यस्य मण्डूकप्लुत्या संबन्धानुवृत्त्या वा तन्मात्रस्यैव संबन्धाङ्गीकारेणादोषादिति चेत्, न; हरये उपेन्द्रः कृष्णैकत्वमित्यादावपि यणापत्तेः।

न च तेषामपवादत्वात् न दोषः, एवं तर्हि तितउशब्दे यणापत्तेः।

न च निर्देशात् गुणस्येव यणोऽपि वारणसंभवः, आहुणे

डो इति निर्देशसंभवादिति तर्कवत् अकारस्यान्तरतमयणोऽभावेन चतुर्णामपि पर्यायेण प्रवृत्त्या तथा तर्कस्य कर्तुमशक्यत्वात् ।

न च देवदत्तहन्तृहतन्यायेन युष्माकमित्यादौ ससुट्कनिर्देशेन नुड्बाधकसुटो निवृत्तौ नुण्निवृत्तिवत् यण्बाधकगुणनिवृत्तौ यणिनवृत्तिरपि सुकरेति वाच्यम्, एतादृशे विषये तन्न्यायाप्रवृत्तेरन्यत्र स्पष्टत्वात् । चिनु हि अत्रेत्यादौ अप्लुतवद्भावेन प्रकृतिभावनिवृत्तावपि प्लुतस्य यणादेशानापत्तेः ।

न च प्लुतस्यासिद्धत्वात् तत्सिद्धिः, 'प्लुतप्रगृह्या अचि—' इति ज्ञापकेन 'सिद्धः प्लुतः स्वरसंधिषु' इति भाष्ये कण्ठरवेण 'ईदूदेत्—' 'अतो रोः—' इति सूत्रयोरुक्तत्वेन तस्यासिद्धत्वासंभवात् ।

न च 'प्लुतप्रगृह्याः' इत्यत्र प्लुतस्य प्रकृतिभावं प्रति आश्रयात्सिद्धत्वं स्वीक्रियताम् । तावतैवेष्टसिद्ध्या 'सिद्धः प्लुतः—' इति वचनाभ्युपगमे न फलमिति वाच्यम्, एहि कर्तृ आशेत्यत्र परत्वात् प्लुते 'ई चाक्रवर्मणस्य' इत्यत्र ईग्रहणप्रत्याख्यानादप्लुतवद्भावे यणि 'उदात्तस्वरितयोः—' इत्यादिना आशेत्याकारस्य स्वरितत्वसिद्धेरेव फलत्वात् ।

न च कर्तृशब्दस्य 'चितः—' इत्यन्तोदात्तत्वात् प्लुतात्पूर्वं यणि कृतेऽपि स्वरसिद्धिरिति वाच्यम्, तृन्नन्तकर्तृशब्दे दोषापत्तेः । किंच तृजन्तत्वेऽपि 'आमन्त्रितस्य' इत्याष्टमिकनिघातप्रवृत्त्या अन्तोदात्तत्वासंभवात् एहि दण्डिन्याशेत्यत्र ङीपोऽनुदात्तत्वेन प्लुतेन विना यण उदात्तस्थानिकत्वासंभवात् ।

ननु 'अप्लुतवदुपस्थिते' इत्यत्र अप्लुते इव अप्लुतवदित्यर्थेन प्लुतः अप्लुतवत् कार्यं लभत इति कार्यातिदेशाङ्गीकारेण अप्लुतह्रस्वदीर्घयोर्भवतो यणादेशस्य अत्रापि प्रवृत्त्या इष्टसिद्धेश्च न दोष इति चेत्, सत्यम्; इको यणचि यथा स्यात्, यदन्यत् प्राप्नोति, तन्मा भूदित्येतदर्थं तस्य सत्त्वात् । अन्यच्चात्र शाकलम् न च तस्यात्यन्तबाधः, आरम्भसामर्थ्यात् । एवं च 'सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः' इति यत्पूर्वाचार्यैः स्मर्यते, तदनेन इग्ग्रहणेन संपाद्यत इत्याहुः ॥



॥ श्रीः ॥

## . इको ह्रस्वोऽङ्यो गालवस्य ॥

इह 'उत्तरपदे' इत्यधिकारः । तेन पूर्वपदाक्षेपः । तस्य विशेष्यत्वात् तद्विशेषणे इक्पदे तदन्तविधिः । अङ्य इति प्रत्ययग्रहणपरिभाषया तदन्तपरम् । ततश्च ङ्यन्तभिन्नस्य इगन्तस्य पूर्वपदस्य ह्रस्वः स्यादुत्तरपदे इति सूत्रार्थः । ग्रामणिकुलम्, ग्रामणिपुत्र इत्यादीन्युदाहरणानि । कुमारीपतिरित्यादौ तद्वारणाय अङ्य इति । रमापतिरित्यादिव्यावृत्तये इक इति ।

इह अङ्य इति विशेषणादेव ङ्यन्तभिन्नस्य ङ्यन्तसदृशस्य इगन्तस्येत्यर्थेनैव इष्टसिद्धौ इक्पदं व्यर्थम् ।

न च तदभावे अच्परिभाषया उपस्थितस्य अच इत्यस्यैव सादृश्यानुयोगितया विवक्षणे ङ्यन्तभिन्नाजन्तस्येत्यर्थापत्तौ रमापति-

रित्यादौ तद्भापत्तिरिति वाच्यम्, सति संभवे व्याप्यधर्मपुरस्कारेणैव सादृश्यस्य वाच्यतया सिद्धान्ते उपस्थितस्य अच इत्यस्य विशेषणत्वेन अज्रूपस्येक इत्यर्थवत् अत्रापि पक्षे उक्तलाघवानुरोधादिगन्तत्वेन सादृश्यग्रहणेन इग्रूपाजन्तपूर्वपदस्येत्यर्थेनादोषात् ।

न चैवमीकारान्तत्वस्य तद्व्याप्यत्वात् तेनैव सादृश्यग्रहणेन ङ्यन्ताभिन्नस्य ईकारान्तस्य पूर्वपदस्येत्यर्थापत्तौ वधूपतिरित्यादौ ह्रस्वानापत्तिरिति वाच्यम्, एवं सति भ्रूभङ्ग इत्यादौ ह्रस्ववारणाय 'इयङुवङ्भाविनामव्ययानां च नेति वाच्यम्' इति वार्तिकस्थोवङ्ग्रहणवैयर्थ्यापत्त्या उक्तरूपेण सादृश्यग्रहणस्य वक्तुं शक्यत्वात् ॥

न च तत्सार्थक्याय नदीत्वोपलक्षितस्य ग्रहणेन नदीत्वोपलक्षितङ्यन्ताभिन्नपूर्वपदस्येत्यर्थेन भुवे श्रियै इत्यत्र नदीसंज्ञाया दृष्टतया भ्रूभङ्गः श्रीमद इत्यत्र तदुपलक्षितत्वेन न वार्तिकासंगतिः । एवं च लक्ष्मीपतिरित्यादौ ह्रस्वप्राप्तावपि ग्रामणिपुत्र इत्यादौ ह्रस्वो न स्यादिति तदर्थमिग्ग्रहणमावश्यकमिति वाच्यम्, तावतापि वार्तिकस्थाव्ययग्रहणवैयर्थ्यस्य तदवस्थतया तथा सादृश्याविवक्षणेन लाघवानुरोधेन केवलेगन्तत्वेनैव सादृश्यविवक्षया सर्वेष्टसिद्धेरित्याहुः ॥



॥ श्रीः ॥

**कर्तृकर्मणोः कृति ॥**

अत्र कृतीत्यत्र प्रत्ययग्रहणपरिभाषया कृदन्त इत्यर्थो

लभ्यते । तच्च कर्तृकर्मणोर्विशेषणं । कृदन्तपदं च तदुपस्थाप्यक्रियापरम् । कृदन्तोपस्थाप्यक्रियाकर्तृकर्मणोः षष्ठीति सूत्रार्थः । यद्वा कृतीति सति सप्तमी । कृदन्ते सति कर्तरि कर्मणि च षष्ठी भवतीति सूत्रार्थः । अत्र पक्षेऽपि प्रत्यासत्त्या कृत्प्रकृत्युपस्थाप्यक्रियानिरूपित एव कर्ता कर्म च गृह्यते । सूत्रोदाहरणम्— भवतः शायिका, अपां स्रष्टा । कर्तृकर्मणोः किम्? शस्त्रेण भेत्ता ।

नन्वत्र कृद्ग्रहणं व्यर्थम् । कर्तृकर्मत्वे क्रियापेक्षे । तद्वाची च धातुरेव । धातोर्हि द्वये प्रत्यया विधीयन्ते—तिङः कृतश्च । तत्र लादेशेषु 'न लोकाव्यय—' इति निषेधेन तद्भिन्नकृदन्तयोग एव षष्ठी भविष्यति । किमत्र कृद्ग्रहणेन?

न च पाचयति यज्ञदत्तो देवदत्तेनेत्यत्र प्रयोज्यकर्तरि षष्ठीं वारयितुं कृद्ग्रहणम् । णिच् तु न कृदिति वाच्यम्, लयोगे नेत्यनेनैव निषेधसिद्धेः; लप्रकृत्यर्थक्रियायोगे नेति तदर्थात् । सा च गुणभूता प्रधानभूता वेत्यदोषः ।

न चात्र कृद्ग्रहणाभावे 'उभयप्राप्तौ कर्मणि' इत्युत्तरसूत्रे उभयप्रवृत्तिप्रयोजक इत्यर्थकस्य उभयोः प्राप्तिः यस्मिन् कृदन्त इति बहुव्रीहेरनापत्तिः, षष्ठीविधायके कृद्ग्रहणाभावे षष्ठ्या अनैमित्तिकत्वेन तत्प्रयोजकत्वस्य कृत्यसंभवेन अन्यपदार्थाप्रसिद्धेः । तथा च तत्पुरुष एव स्यात् । तस्मिन् सति ओदनस्य पाकः, ब्राह्मणानामागमनमिति भिन्नक्रियानिरूपिते कर्तरि षष्ठी न स्यात्, कर्मण्येवेति नियमनात् । सति तु कृद्ग्रहणे कृतस्तत्प्रयोजकत्वात् अन्यपदार्थस्य स्पष्टत्वेन 'उभयगतिरिह भवति' इत्यादाविव 'उभयप्राप्तौ' इत्यत्रापि बहु-

व्रीहिः सिध्यतीति वाच्यम्, कृत्पदोपादानेऽपि देवदत्तकर्तृकयज्ञदत्तकर्मकगमनहननमित्यर्थे देवदत्तस्य यज्ञदत्तस्य च हननमित्यत्र एकधातुवाच्यभिन्नक्रियानिरूपिते कर्तरि षष्ठीनियमवारणाय एककृत्प्रत्ययप्रकृतिनिरूपितक्रियाकर्मणीत्यर्थस्य व्याख्यानलभ्यत्ववत् ममापि कर्तृत्वकर्मत्वयोः क्रियासापेक्षत्वेन क्रियायोगमन्तरा कर्तृकर्मव्यपदेशासंभवेन ताभ्यामाक्षिप्तक्रियावाचकधातोरेव अन्यपदार्थत्वसंभवेन तस्य सौत्रकृत्पदेनानुल्लेखेऽपि वस्तुतस्तस्य षष्ठीप्रयोजकत्वेन 'एकाचो द्वे—' इत्यादाविव व्याख्यानादेव बहुव्रीहिणा तल्लाभेन तदर्थं कृत्पदानपेक्षणात् ।

न च करोतीति कृदिति व्युत्पत्त्या गुणभूते णिच्प्रकृत्यर्थ कर्तरि भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामित्यादौ षष्ठ्यर्थमिति वाच्यम्, तृतीयावत् गुणभूते कर्तरि षष्ठ्या अपि सिद्धेः ।

न च नदीं नाविकः, आभ्रिको भूमिमित्यादौ तद्धितोपस्थाप्यक्रियानिरूपितकर्मणि षष्ठीवारणार्थं कृद्ग्रहणमिति वाच्यम्, तद्धितादिना कारकान्वययोग्यतावच्छेदकसाध्यत्वेन तरणादेर्भानाभावेन तत्क्रियामादाय कारकविभक्तेर्दुर्वचत्वात् ।

न च कृतपूर्वी कटमित्यत्र तद्धितान्ते षष्ठीवारणार्थं कृद्ग्रहणम् । अन्यथा कृतं पूर्वमनेनेति विग्रहे सुप्सुपेति तयोः समासे ततः 'सपूर्वाच्च' इति सूत्रेण कर्तरि इनिप्रत्यये कृते तत्र कटस्य कर्मत्वेन षष्ठी स्यात् । सति तु कृद्ग्रहणे तत्सामर्थ्यात् कृदन्तमात्रोपस्थाप्यक्रियामात्रनिरूपितकर्तृकर्मणोरेव षष्ठी ; न तद्धितोपस्थाप्यक्रियायामपीति न दोष इति वाच्यम्, निष्ठान्तधातूपात्तक्रियायोगे न इत्य-

नेन निषेधेनैव षष्ठ्यप्राप्त्या तदर्थं कृद्ग्रहणस्यानावश्यकत्वात् ।

न च कर्तव्यपूर्वी कटमित्यादौ षष्ठ्यप्रवृत्तये कृद्ग्रहणमिति वाच्यम्, कृञः सकर्मकत्वेन 'तयोरेव—' इति नियमेन कर्मण्येव तव्यस्य प्रवृत्त्या तेन कर्मणोऽभिधानेन द्वितीयाषष्ठ्योरुभयोरप्यप्राप्त्या तादृशवाक्यस्यैवासंभवात् । किं च कर्तव्यः कटः पूर्वमिति विग्रहे 'सविशेषणानाम्—' इति निषेधेन वृत्तेरेव दुर्लभता । तस्मात् कृद्ग्रहणं व्यर्थमेवेति चेत्, अत्र कौस्तुभकृतः—

नेह पच्यते शक्यं क्षुदुपहन्तुमित्यादाविव कर्मसामान्ये प्रत्यये सति पूर्वं कटरूपकर्मविशेषसंबन्धमप्रतिपद्यमान एव कृतशब्दः पूर्वशब्देन समस्यते। पश्चात् किं कृतमिति विशेषजिज्ञासायां कटरूपकर्मविशेषसंबन्धे सति तत्र षष्ठी स्यात् । तत्र षष्ठीवारणार्थं कृद्ग्रहणम् न च कर्मसामान्ये प्रत्ययेऽपि शक्यं क्षुदुपहन्तुमित्यत्रेव कटस्याभिधानं दुर्वारमिति वाच्यम्, तद्धितार्थेन एकार्थीभूतस्य कृतशब्दस्य कटेन सह निष्कृष्य सामानाधिकरण्येनान्वयासंभवेन तदभिधानासंभवात् । शक्यं क्षुदुपहन्तुमित्यादौ तु तयोः सामानाधिकरण्येनान्वयादभिहितत्वात् न द्वितीया, गुणभूतक्रिययापि कारकाणां योगात् प्रकृते च कटस्य कृधात्वर्थफलाश्रयत्वात् ततो द्वितीया । इनिप्रत्ययस्य आश्रयोऽर्थः । धात्वर्थस्य कृतेस्तत्रान्वयः । कटपदार्थस्य कर्मणो धात्वर्थे अन्वयः । क्तप्रत्ययार्थस्य कर्मणोऽपि तत्रैवान्वयः । तथा च कटकर्मविषयकप्राक्कालिककृत्याश्रय इति बोध इत्याहुः ॥

अन्ये तु कर्मसामान्ये क्तप्रत्ययेऽपि विशेषानालिङ्गितसामान्याभावेन कर्मत्वावच्छिन्नस्य सर्वस्याप्यभिधानं दुर्वारम् । कट

पदार्थस्य धात्वर्थे अन्वयोऽयुक्तः, समानपदोपात्तक्तप्रत्ययबोध्यकर्मणैव कर्माकाङ्क्षाया निवृत्त्या बाह्यकटादिरूपकर्माकाङ्क्षाभावेन तदर्थे तदन्वयासंभवात् । किंच कारकाणां तदर्थप्रत्ययान्तधातुसमभिव्याहारे धात्वर्थे अन्वयोऽव्युत्पन्नः । अन्यथा तण्डुलं पचति इत्यर्थे तण्डुलः पचति इति प्रयोगापत्तेर्दुर्वारत्वात् । सति संभवे तत्रैवान्वय औत्सर्गिकः । यत्र तु तथान्वये बाधकमुपलभ्यते— 'वृत्तस्य विशेषणयोगो न' इति । तत्र तु धात्वर्थे अन्वय इत्यपि न युक्तम्, तण्डुलं पक्तीयति इत्यादिप्रयोगापत्तेः । सिद्धान्ते तु तण्डुलं पक्तीयतीति न, कारकाणां तदर्थकप्रत्ययार्थेऽप्येकदेशत्वेनान्वयासंभवात् 'ऋद्धस्य राजपुरुषः' इतिवत् तथा प्रयोग एव न । किं च तण्डुलः पच्यतेतमामित्यादौ कर्मणः क्रिययैव योगात् द्वितीयापत्तिः । यदि तत्र क्रियाविशेषणीभूतेन लकारार्थेन कर्मणान्वयः, तर्हि क्तार्थेनाप्यन्वयो दुर्वार एव । तस्मात् कारकाणां तदर्थकप्रत्ययसमभिव्याहारे धात्वर्थान्वयोऽव्युत्पन्न एव । कर्मसामान्ये प्रत्यय इति पक्षोऽपि न युक्त एव । तस्मात् पच्यते तण्डुलः स्वयमेवेत्यादौ व्यापाराणामविवक्षावत् अत्र कर्मान्वययोग्यधात्वर्थफलांशस्याविवक्षया अकर्मकत्वात् भाव एव प्रत्ययः । कृतं पूर्वमनेनेति विग्रहे सुप्सुपेति समासः, तद्धितश्च । ततश्च कृतपूर्वीत्ययं पूर्वं कृतवानित्यनेन समानार्थकः । समासतद्धितानन्तरं च वृत्तिभेदात् पूर्वं त्यक्तस्य फलांशस्य विवक्षया कटस्य गुणभूतक्रियया संबन्धः । तथा च एतादृशविषये षष्ठीवारणार्थं कृद्ग्रहणम् । न च कृञोऽविवक्षितकर्मकतया अकर्मकत्वेन भावे क्तप्रत्यये पश्चादपि कर्मान्वयो दुर्वचः । अन्यथा ग्रामं गम्यते इत्यादिप्रयोगापत्तेरिति वाच्यम्, विवक्षायाः प्रामाणिकप्रयोगानुरोधित्वेनास्म-

दीयविवक्षया अतिप्रसङ्गापादनस्यायुक्तत्वात् अप्रयुक्ते यथ लक्षणं प्रयोक्तव्यमिति भाष्योक्तन्यायात् । अन्यथा असूर्य पश्या राजदारा इत्यादिष्वसमर्थसमासवत् अन्यत्राप्यसमर्थसम सापत्तेः । अत एव कृतपूर्वीत्यत्र 'न लोक—' इति निषे न । अन्यथा तेन निषेधेनैव षष्ठ्यप्राप्त्या भाष्यासंगतिः सिद्धान्ते तु निष्ठान्तपदशक्तिज्ञानसहकारेणोपस्थितक्रियाकर्तृकर्मणोर तेन निषेध इति नात्र तत्प्राप्तिः, सकर्मकक्रुभूधातुप्रकृतिकभावक्तान्त स्य ईदृशवृत्तिविषय एव साधुत्वाङ्गीकारेण अन्यत्राप्रयोगात् तदन्त मात्रस्य पृथक् शक्तिग्रहे मानाभावात् । प्रकृते च कृधातुक्तप्रत्ययपूर्वशब्दे इनिप्रत्ययशक्तिज्ञानसहकृततद्धितान्तसमुदायशक्त्यैव तदर्थोपस्थित पूर्वकालक्रियाककर्तृणां परस्परविशिष्टानां बोधः ; न तु तादृशार्थो पस्थितौ कृदन्तशक्तिज्ञानमपि सहकारीति कृदन्तशक्तिज्ञानसहक रेण उपस्थित्यभावान्न दोषः । न च गत्यर्थेभ्यो भावे क्तस 'गत्यर्थाकर्मक—' इति सूत्रेणानुशासनेन तस्य लोके स्वातन्त्र्येण प्रयोगसंभवात् तदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्मत्वात् गतपूर्वी ग्राममित्यादौ षष्ठी दुर्वारैवेति वाच्यम्, उक्तरीत्या 'न लोक—' इति निषेधेनादोषात् । न च पक्वपूर्वी सूपम् अधीतपूर्वी वेदमित्यादिप्रयो गासंभवः, सकर्मकप्रकृतिकभावक्तान्तस्यान्यत्रानभिधानादिति वाच्यम् कृतपूर्वी कटं भुक्तपूर्वी ओदनमिति कृद्ग्रहणप्रत्युदाहरणप्रदर्शनपर भाष्येण कृद्ग्रहणप्रत्युदाहरणयोग्येदृशवृत्तिविषय एव तस्य साधुत्व नान्यत्रेत्यङ्गीकारेणादोषादित्याहुः ॥

केचित्तु भाष्योक्तकृतपूर्वी कटमिति प्रत्युदाहरणान्यथानुपपत्त्य सकर्मकाणामप्यविवक्षितकर्मतया अकर्मकत्वात् भावे क्तः । सा

विवक्षा ईदृशविषय एवेति नातिप्रसङ्ग इति कल्पनमयुक्तम्, तस्या-न्यथाप्युपपत्तिसंभवात्। तथा हि— कृतपूर्वी कटमित्यत्र कर्मण्येव क्तप्रत्ययः, न तु भावे। न चैवं क्तेनाभिधानात् द्वितीयानापत्तिः, कृञ्धातूपस्थाप्यक्रियाकर्मणः क्तेनोक्तत्वेऽपि 'सपूर्वाच्च' इति सूत्रेण इनिप्रत्ययस्य कर्तर्यनुशासनेन तदुपस्थाप्यगुणीभूतक्रियानि-रूपितकर्मणोऽनुक्तत्वात् द्वितीयोपपत्तेः। एवं च कटरूपकर्मण-स्तद्धितार्थभावनाकर्मत्वेऽपि कृदन्तोपस्थाप्यभावनाकर्मत्वाभावात् न षष्ठीति बोधयितुं कृद्ग्रहणमिति न किंचित्प्रतिकूलम्। न च क्रियाभेदस्यैव कर्मभेदनियामकतया तद्धितस्यापि एतादृशे विषये समभिव्याहृतक्रियाकर्तर्येव प्रवृत्त्या तेनापि तस्या एवोपस्थित्या प्रकृते तयोः कृत्योर्भेदासंभवेन क्तप्रत्ययेन कृञ्धात्वर्थकर्माभिधाने तद्धितोपस्थाप्यकृतिकर्मणोऽप्यभिहितत्वं दुर्वारमिति वाच्यम्, शयने शेते आसने आस्ते इत्यादौ गुणक्रियानिरूपिताधिकरणत्वस्योक्तत्वे-ऽपि प्रधानक्रियानिरूपिताधिकरणत्वस्यानुक्तत्वेन सप्तमीवदत्रापि द्वितीयोपपत्तेरित्याहुः॥

तदेतच्चिन्त्यम्; ईक्षांचक्रे इत्यादौ आमन्तोपस्थाप्यव्यापार-विशेषस्य अनुप्रयुज्यमानकृञुपस्थाप्यव्यापारापेक्षया विभिन्नकर्तृकर्म-कत्वव्यावृत्तये सामान्यविशेषयोर्भेदाङ्गीकारेण तयोरैक्यावगतिद्वारा एतत्साधनयोरपि ऐक्यावगतिवत् कृतपूर्वीत्यत्रापि तद्धितार्थकृतेः कृञर्थकृत्यपेक्षया विभिन्नकालिकत्वविभिन्नकर्तृकत्वविभिन्नकर्मकत्वव्या-वृत्तये तयोरभेदान्वयस्यावश्यकतया प्रासादकौ ग्राम इत्यत्रेव वृत्तौ क्तप्रत्ययार्थस्य प्रकृत्यर्थं प्रति विशेषणत्वेन पूर्वकालिकसाविषयक-कृत्यभिन्नकृत्याश्रय इति बोधात् तेन तयोरैक्यावगतौ तद्द्वारा तत्सा-

अनयोरपि ऐक्यानुमानेन एतादृशविषये अन्यतरक्रियाकर्मण उक्तत्वेन अन्यतरस्मिन्ननभिहितत्वस्य दुर्वचत्वात् । शयने शेते आसने आस्ते इत्यादौ साधनभेदात् कालभेदात् क्रिययोरैक्यप्रतीतेरनावश्यकतया क्रिययोर्भेदेन गुणक्रियाधिकरणस्योक्तत्वेऽपि प्रधानक्रियाधिकरणस्यानुक्तत्वेन न सप्तम्यनुपपत्तिः ।

किंच वाचकभेदेन क्रियाभेदाङ्गीकारेऽपि कृतपूर्वपदे विशेष्यतयोपस्थितस्य क्तार्थकर्मणस्तद्धितार्थकृतावनन्वयेन तयोः परस्परं सामर्थ्याभावात् तद्धितवृत्तेरेवानुपपत्त्या तद्वारणाय तद्धितार्थकृतान्वये पूर्वकालिककृतिविषयीभूतव्यक्तिविषयककृत्याश्रयो देवदत्त इति बोधेन स्वान्वितक्तप्रत्ययोपस्थाप्यकर्मणैव तद्धितार्थकृतेः कर्माकाङ्क्षानिवृत्त्या कटादिरूपबाह्यकर्मणस्तत्र कर्मत्वेनान्वयासंभवेन द्वितीयोपपत्तेरसंभवात्; अन्यथा धात्वर्थसंगृहीतकर्मकभावनायामपि बाह्यकर्मान्वयापत्त्या वायुं जीवतीति प्रयोगापत्तिः । किं च विभक्त्यर्थकर्मादेर्धात्वर्थान्वयस्यैव व्युत्पन्नत्वेन तद्धितार्थगुणभूतक्रियान्वयोऽयुक्तः; अन्यथा पूर्वी कटमिति प्रयोगापत्तेर्दुर्वारत्वात् तद्धितार्थभावनायां द्वितीयार्थकर्मत्वान्वये धातुसमभिव्याहारस्यात्र सत्त्वात् । न च यत्र तद्धितवाच्यक्रियायाः समभिव्याहृतधातुवाच्यक्रियया अभेदः, तत्रैव कारकान्वय इति न दोष इति वाच्यम्, एवमपि तर्या तरति तारिको नदीम्, देवनेन दीव्यति दैवनिको दुर्योधनः पाण्डवमिति प्रयोगापत्तेः । यदपि— इनिप्रत्ययस्य कृत्याश्रयरूपः कर्ता अर्थः । क्तान्तं च इनिनिरुक्तार्थे तात्पर्यग्राहकम्; न तु कृतिकर्मार्थकम्; तथा च क्तान्तेन कर्मानभिधानात् न द्वितीयानुपपत्तिः । तद्धितेन च धात्वर्थकृतेरेवोपस्थित्या तत्र कटोत्तरश्रूयमाणाम्प्रत्ययार्थान्वयसत्त्वेऽपि

न कारकाणां धात्वर्थान्वयनियमभङ्गः, क्तान्तस्य तात्पर्यग्राहकतया तद्धितार्थभावनाया धातुप्रयोज्योपस्थितिविषयत्वानपायात् । एवं च तद्धितार्थभावनान्वये षष्ठीवारणाय क्तग्रहणमिति, तन्न सुन्दरम्; गभीरायां नद्यां घोष इत्यादौ नदीपदस्य गभीरनदीलक्षकत्ववत् इनिप्रत्ययस्य कृत्याश्रये शक्तस्य समभिव्याहृतक्तपदार्थान्तर्भावेण वृत्त्यभावेन अस्य तात्पर्यग्राहकत्वासंभवात् । न च कृत्याश्रये शक्तस्यापि लक्षणया कृतिविषयबोधकत्वेन तस्य तात्पर्यग्राहकत्वं संभवतीति वाच्यम्, तथा सति कृतपूर्वी देवदत्त इति देवदत्तपदेन सामानाधिकरण्यानुपपत्तेः । न च कृतेत्यत्र सासमानप्रत्ययार्थान्तर्भावेण वृत्त्यनङ्गीकारेऽपि क्तप्रत्ययप्रकृत्यर्थान्तर्भावेण वृत्त्यङ्गीकारात्तस्य तात्पर्यग्राहकत्वं सुवचमिति वाच्यम्, प्रत्ययशक्त्यैव कृतेः प्रकारतयोपस्थितिसंभवेन तदंशेऽपि तात्पर्यग्राहकानपेक्षणात् । न च कारकाणामन्वयसिद्ध्ये धातुना येन रूपेण उपस्थितिः, तेन रूपेण प्रत्ययेन लक्षणया उपस्थितिसिद्ध्यर्थं तात्पर्यग्राहकापेक्षा; अत एव पूर्वीत्यत्र इनिप्रत्ययार्थकृतौ कटमित्यस्य नान्वय इति वाच्यम्, तथा सति कर्मपदे लक्षणया व्यापारस्य [illegible] बोधे तण्डुलं देवदत्तेनेति प्रयोगापत्तेः । किंच नाविक इत्यत्र ठक्प्रत्ययस्य तरणार्थबोधकत्वे 'नौद्व्यचः —' इत्यत्राधिकृततरतीत्यादेः [illegible] प्रकृतिभूततृधातोरपि प्रयोजकत्वेन तस्यापि धातुप्रयोज्योपस्थितिविषयत्वेन तत्र नदीमित्यस्याप्यन्वयापत्तेः । एवमाक्षिक इत्यादावपि देवदत्तमित्यादेरन्वयो दुर्वारः स्यात् । यदपि— प्रधानीभूतकृत्तद्धिताख्यातान्यतमानभिहितत्वं द्वितीयाप्रयोजकमिति, तदपि न; पक्वस्तण्डुलोऽस्तीत्यादौ द्वितीयापत्तेः, तण्डुलं पक्त्वा ओदनो भुज्यत

इत्यादौ द्वितीयानापत्तेश्च । न च गुणप्रधानभावापन्नक्रियानिरूपितः कर्तुः कर्मणो वा यत्रैकत्वम्, तत्र प्रधानक्रियानिरूपिततच्छक्त्यभिधाने गुणक्रियानिरूपिततच्छक्तेरप्यभिहितवद्भानमिति वाच्यम् ओदनं पक्त्वा ओदनो भुज्यते चैत्रेण पक्त्वा चैत्रो भुङ्क्ते इत्यत्र द्वितीयातृतीययोरनापत्तेः, 'श्रुत्वाप्यर्थं नानुमतस्तेन सोऽर्थः कुबुद्धिना' इत्यादौ द्वितीयानापत्तेः, पूर्वोक्तनदीं नाविक इत्यादिप्रयोगाणामापत्तेश्चेति दिक् ॥



॥ श्रीः ॥

## ॥ माधवाभरणम् ॥

श्रीभूमिनीळासहितं सर्वविद्याधिदैवतम् ।
कुन्दमन्दारसुभगं नौमि श्रीहयकंधरम् ॥
कौमुदीयुतमनोरमोत्सुकैर्दुर्निबोधविभवः स माधवः ।
वेदमौळिगुरुसूक्तिदृश्वभिर्दोषहीनगुणवान्विबुध्यते ॥

सुब्वृत्तौ तावत् वृत्रघ्नो वृत्रघ्ण इति रूपद्वयं माधवेनोदाहृतम् । तत्र तदाशयानिज्ञानोपज्ञावज्ञानिरसनाय तदाशयः स्फुटोक्रियते ॥

अत्रेत्थं तदाशयः— आधुनिकैरस्माभिर्लक्षणैकचक्षुष्कतया लक्षणप्रवृत्त्यनुरोधेन प्रवर्तितव्यम् । तत्र च प्रमाणानामैककण्ठ्ये संभवति तेषां परस्परपराङ्मुखीभावकल्पनं न प्रामाणिकहृदयंगमम्

तथा च सूत्रवार्तिकभाष्याणामैकमत्यं नीत्वा वैयाकरणैर्लक्ष्यं निर्धारयितव्यम् । वृत्रघ्न इत्यादौ च सूत्रकारमते वैकल्पिकमेव णत्वं प्रवर्तितुमर्हति; न तु नित्यम्, न वा निषेधः । तथा हि—

अखण्डपदस्थत्वाभावेन 'रषाभ्याम्—' इत्यस्य 'अट्कुप्वाङ्' इत्यस्य नियमविधित्वेन प्रापकान्तरसापेक्षतया अत्र च नित्यणत्वप्रापकविध्यन्तराप्रवृत्त्या 'अट्कुप्वाङ्—' इत्यनेनैव नित्यस्य च केवलयौगिकत्वेन 'पूर्वपदात्—' इत्यस्य चाप्रवृत्तिः । अल्विधौ स्थानिवद्भावनिषेधेन उत्तरपदस्यैकाच्त्वाभावेन न 'एकाजुत्तरपदे' इत्यस्य प्रवृत्तिः । न च समासचतुष्टयेऽपि 'अनल्विधौ' इत्यस्य प्रसक्तिरस्तीति कथमत्र स्थानिवद्भावनिषेध इति तु न शङ्कितव्यम्; अलः परस्य विधिरिति पञ्चमीसमासे तन्निषेधसंभवात् । न च सूत्रे पञ्चम्यन्तस्योपादानाभावान्न तन्निषेधसंभव इति वाच्यम्, निमित्तत्वेनोपादानावश्यकतायां मानाभावात्, किं च वक्ष्यमाणवार्तिकस्य अत्पूर्वग्रहणस्य च लक्ष्यसाधने भाष्यकृता विशेषाभावसूचनात् आतः परत्वेन प्रातानीत्यादौ णत्वाप्रवृत्तिसंपादनेन सामर्थ्यवर्णनायोगाच्च प्रघ्नन्तीत्यादौ स्थानिवद्भावेन अत्पूर्वत्वमाश्रित्य 'हन्तेः—' इति णत्वप्रसक्तौ तत्र स्थानीभूतादलः परस्य विधित्वेनाल्विधित्वस्य वर्णनीयतया निमित्तत्वेनोपादान एवाल्विधित्वमित्ययुक्तत्वाच्च, हल्ङ्यादिसूत्रे भाष्ये प्रथमहल्ग्रहणाभावेऽपि संयोगान्तलोपेनैव तल्लक्ष्यसिद्धिमुपवर्ण्य नलोपरुत्वयोरेव दोषतत्समाधानयोरभिधानात् द्यौरित्यादौ त्वद्रीत्या स्थानिवद्भावेन संयोगान्तलोपप्रसक्तावपि तच्छङ्कासमाधानयोरकरणेन निमित्तत्वेनानुपादानेऽपि वस्तुतोऽलः परस्य विधित्वेन 'अनल्विधौ' इत्यस्य प्रवृत्तेः स्वीकारावश्यंभावाच्च, क्षीरपेणेत्यादौ अल्विधित्वेन

स्थानिवद्भावाप्रवृत्तेरेकाच्त्वातिदेशार्थताया अन्तादिवत्सूत्रस्य शेखरे उक्तत्वेन तत्र च निमित्तत्वेनोपादानाभावेऽपि वस्तुतः स्थान्यलः परत्वेनैव तस्य वक्तव्यत्वाच्च, समासचतुष्टयस्यैवाकरे उपलभ्यमानतया प्रकारान्तरेणाल्विधित्ववर्णनायोगात् त्वद्रीत्या तादृशशेखरविरोधाप-त्तेश्च, हे गौरित्यादौ पञ्चमीसमासपक्षे 'अचः परस्मिन्—' इति स्थानिवद्भावेन 'एङ्ह्रस्वात्—' इति संबुद्धिलोपमाशङ्क्य, 'प्रतिगणय्य' इति भाष्योदाहरणेन पञ्चमीसमासपक्षे स्थानिवद्भावस्य अनित्यत्वज्ञाप-नान्न दोष इत्युक्त्वा, निमित्तत्वनिवेशे तु न मानमिति शेखरकृता वर्णितत्वेन त्वन्मते पूर्वोत्तरसूत्रयोर्वैरूप्यापत्तेश्च, मन्मतरीत्या संभ-वति सारूप्ये वैरूप्याभ्युपगमस्यान्याय्यत्वाच्च ॥

नन्वेवमपि भूतार्थे 'ब्रह्मभ्रूण—' इति नियमेन उपपदा-न्तरे क्विपोऽप्रवृत्तावपि वर्तमानाद्यर्थे 'क्विप् च' इत्यनेन तत्संभवात् प्रकर्षेण हन्तीति प्रहा तस्माच्छसि प्रघ्न इत्यादौ वार्तिकमतविरुद्धमपि णत्वं सूत्रमते 'हन्तेरत्पूर्वस्य' इति नित्यं प्राप्नोत्येव, स्थानिवद्भा-वात्। नहि तत्र प्रागुक्तरीत्या अल्विधित्वेन स्थानिवद्भावनिषेधः संभवति, 'अल्लोपोऽनः' इत्यल्लोपरूपादेशविधौ 'हन्तेरत्पूर्वस्य' इति णत्वविधौ च अदिति विशिष्टसमुदायाश्रयणेनाल्विधित्वाभावात्। यथोक्तम् 'भो भगो—' इति सूत्रे शेखरेण—अग्रहीदित्यत्र दीर्घे लोपे च इट्त्वेनैव निर्देश इति न दोष इति। स्थानिवत्सूत्र-शेखरेऽपि—शब्दतः स्थानिस्थान्यवयवान्यतराल्वृत्तिधर्मवतो विशे-ष्यतया विशेषणतया वा यत्राश्रयणम्, तत्र निषेधः। शब्दत इत्युक्तेरग्रहीदित्यत्र 'इट ईटि' इति सिध्यति, दीर्घविधावत्र च इट इति समुदायाश्रयणात्; अन्यथा टकारस्य अनुबन्धत्वात्

इकारमात्रस्यैवोभयत्राप्याश्रयणमिति अल्विधित्वं स्यादित्युक्तम् । तथा च आदेशविधौ कार्यान्तरविधौ च शब्दतो यत्र समुदायाश्रयणम्, तत्र अल्विधित्वं नेति शेखरमतं सिद्धम् । उभयत्रग्रहणात् दीर्घविधावत्र च समुदायाश्रयणादित्युपादानाच्च स्थानिविधावपि समुदायाश्रयणं शेखरकाराभिप्रेतमिति तत्तात्पर्यकल्पनमयुक्तमेवेति सुधीभिरवगन्तव्यम् । एवं च सति 'अल्लोपोऽनः' इत्यल्लोपरूपादेशविधौ 'हन्तेः—' इति णत्वविधौ च उभयत्रापि शब्दतः 'अत्' इति समुदायाश्रयणात् नाल्विधित्वसंभवः । अत एव 'भो भगो—' इति सूत्रे अश्ग्रहणाभावे पयस्सु इत्यादौ 'रोः सुपि' इति रुत्वविधानात् तत्रादेशविधौ 'भो भगो—' इति यत्वविधौ च शब्दतः 'रोः' इति समुदायाश्रयणात् 'अनल्विधौ' इति निषेधाप्रवृत्त्या स्थानिवत्त्वेन रुत्वात् यत्वं स्यादिति अश्ग्रहणस्य तदप्रवर्तनं प्रयोजनमिति, देवाः सन्तीत्यादौ 'खरवसानयोः—' इति सूत्रेण शब्दतो रेफस्थाने विसर्गविधानात् यत्वविधौ 'रोः' इति समुदाश्रयणेऽप्युभयत्रापि समुदायाश्रयणाभावात् अल्विधित्वेन स्थानित्त्वाप्रसक्तेस्तत्र अश्ग्रहणाभावेऽपि न दोष इति च शेखरोक्तं संगच्छते ॥

अथ 'अत्' इत्यनेन अकारस्यैवोपस्थितिः, 'तपरस्तत्कालस्य' इति संज्ञाकरणात् । 'इट्' इत्यनेन तु समुदायस्यैवोपस्थितिः । शब्दत इत्यस्य प्राथमिकोपस्थितिविषयो निर्दिष्टसमानानुपूर्वीकः समुदाय इत्यर्थोऽभिप्रेतः । तथा च इट्शब्देन प्रथमतः समुदायोपस्थितेरनन्तरमनुबन्धविनिर्मोकेऽपि न दोषः । 'अत्' इति शब्देन तु प्रथमत एव अकारमात्रस्योपस्थितिरिति

वैषम्यं तु न शङ्कितव्यम्, इट्शब्देनापि टित् य इकार इत्येवं प्राथमिकोपस्थितेरभ्युपगमादविशेषात् । अत एव निष्ठासूत्रे भाष्यप्रदीपोद्द्योते—'गुप्तिज्किद्भ्यः सन्' 'सन्यङोः' इत्यादौ धातोः नित् सकारो भवति । नित् यः सकारस्तदन्तस्य द्वित्वमित्याद्यर्थ इत्युक्तं संगच्छते । अत एव 'क्याच्छन्दसि' इति सूत्रे कित यो यप्रत्ययस्तदन्तादुप्रत्यय इति व्याख्याय क्यजन्तादिव कण्ड्वादियगन्तादपि 'तुरण्यवोऽङ्गिरसः' 'सपर्येम सपर्यवः' 'शकुनं भुरण्युम्' इत्युप्रत्ययः कैयटहरदत्तादिभिरुदाहृतः संगच्छते । लक्ष्यानुरोधेन आनुपूर्वीविशेषं विवक्षित्वा अतिप्रसक्तिर्निरसनीया । एतेन 'घञः सास्याम्—' इति अप्रत्ययान्तादपि 'टिड्ढाणञ्—' इति ङीप् स्यात्, तत्रापि ञित् यः अकारप्रत्ययस्तदन्तादित्यर्थस्यैव उक्तरीत्या संभवादिति शङ्का परास्ता; तत्र लक्ष्यानुरोधेन स्वाव्यवहितोत्तरत्वरूपविशेषणस्यापि विवक्षणेन स्वाव्यवहितोत्तरअकारेत्को योऽकारप्रत्ययस्तदन्तात् ङीबित्यर्थाभ्युपगमेनादोषात् । 'ताच्छीलिके णे अण्कार्यम्' इति तु उक्तप्रकारतात्पर्यकमेव सजातीयनियमार्थकमिति न तदनुपपत्तिरिति ध्येयम् । 'टिन्ङिन्मित्सु प्रतिषेधः' इति वार्तिकेन अनुबन्धविनिर्मुक्तस्यैव प्राथमिकोपस्थितिविषयत्वलाभाच्च। अत एव 'हलन्त्यम्' इति सूत्रे 'पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैव उपदेशकाल एवेत्संज्ञेति 'नाज्झलौ' इति सूत्रभाष्यात् । अत एव 'इदम इश्' इत्यादौ अण्त्वात्सवर्णग्रहणमाशङ्क्य 'अप्रत्ययः' इति निषिध्यत इति भाष्योक्तं संगच्छते' इति शेखरोक्तं संगच्छते । अनुबन्धविशिष्टस्योपस्थितौ हि इश् इत्यनेन इश् इत्यस्यैवोपस्थित्या तादृशसमुदायस्यानण्त्वात् तदाशङ्कासमाधाने निर्दल

स्यातामिति तद्भाष्यासंगतिः । 'अस्य च्वौ' इत्यादौ प्रथमोपस्थितेन सवर्णग्रहणबोधनेन चरितार्थत्वात्समुदायोपस्थित्यनन्तरमनुबन्धविनिर्मोके अण्त्वात्सवर्णग्राहकतापादनमयुक्तमिति तद्भावः । किंच इट्शब्दस्य इकार आदिरित्यर्थः, अच्छब्दस्य ह्रस्वाकार इतिवत् । तपरसूत्रस्येव 'आद्यन्तौ—' इत्यस्यापि संज्ञाविधित्वस्यापि भाष्ये प्रदर्शितत्वात् । तथा च सति इत्संज्ञकटकारककारौ क्रमेण आद्यन्तशब्दयोः संज्ञेति 'आद्यन्तौ—' इत्यस्यार्थः सिद्धो भवतीति संज्ञात्वमिट्शब्दस्यापि तुल्यम् । न च संज्ञाविधित्ववर्णनेऽपि परिभाषात्वस्यैव स्थापनात् अस्थितपक्षाश्रयणेन वैषम्यनिरासो न युक्त इति वाच्यम्, भाष्यकृता तत्सूत्रस्य संज्ञाविधित्वे लक्ष्यासिद्धिरूपदूषणानुपन्यासेन पक्षद्वयेऽपि लक्ष्यसिद्धौ तुल्यकक्षतावबोधनात् । अत एव मञ्जूषायां नञर्थनिरूपणावसरे—अव्ययीभावस्य नित्यत्वात् भूतले न घट इति वाक्यं दुर्लभमित्याशङ्क्य अस्थितेऽपि 'पूर्वपदार्थप्रधानो नञ्तत्पुरुषः' इति पक्षे तत्पुरुषस्याव्ययीभावेन बाधप्राप्त्यां सत्यामपि भाष्यकृता तदाशङ्काया अकरणेन नञोऽव्ययीभावाभावानुमानात्तादृशवाक्यं निर्व्यूढं संगच्छते । अन्यथा तत्रैवात्रापि लक्ष्यासिद्ध्यनाशङ्कनेऽपि अस्थितपक्षत्वान्नेदं भाष्यं स्वाभिमतसाधकत्वेन प्रमाणीकर्तुं युक्तमिति तुल्यमिति मञ्जूषाया असंगत्यापत्तिः ॥

एवं च प्रश्न इत्यादौ 'अनल्विधौ' इति निषेधानवतारात् 'हन्तेः—' इति णत्वं दुर्वारमेवेति चेत्, सत्यम्ः अन्त्यशब्दत इत्यादिशेखरमतस्य बहुतरदूषणग्रस्तत्वेन हेयत्वादुक्तदोषाप्रवृत्तेः ।

अन्यथा तदुक्तरीत्यभ्युपगमे 'श्नाभ्यस्तयोरातः' इत्यत्र शब्दतः 'आतः' इति समुदायाश्रयणात् 'लङः शाकटायनस्य' इत्यत्रापि 'आतः' इत्यनुवृत्तेः सत्त्वात् उभयत्रापि शब्दतः समुदायाश्रयणात् दरिद्रातेर्लङि आल्लोपे स्थानिवद्भावेन झिप्रत्ययस्य स्थाने 'लङः शाकटायनस्य' इति जुसो वैकल्पिकत्वापत्तिरिति दिक् । दूषणान्तराणि तु अस्मत्कृतसद्युक्तिरत्नावल्यां द्रष्टव्यानीत्यलं प्रसक्तानुप्रसक्तपरिधावनेन ॥

नन्वेवमपि पञ्चमीसमासपक्षे 'अचः परस्मिन्--' इति स्थानिवद्भावात् वृत्रघ्न इत्यत्र णत्वं दुर्वारमेव । अत एव 'अल्विधित्वेन स्थानिवद्भावाभावात्' इति माधवग्रन्थमुपन्यस्य, अचः परस्मिन्नित्यस्य अल्विध्यर्थत्वात् तद्ग्रन्थस्य अयुक्ततोक्ता तत्त्वबोधिन्यामिति चेत्, नैतद्युक्तम्; अल्विधित्वेन स्थानिवद्भावो नेति वदतोऽभिप्रेतार्थस्यानुपदमेव स्फुटीकृतत्वात्, प्रत्युत स्वस्यैव तत्त्वबोधनवैधुर्यसूचनात्, 'अचः परस्मिन्—' इति स्थानिवद्भावस्य पञ्चमीसमासपक्षे अनित्यत्वात्तदप्रवृत्तेः सूपपादत्वाच्च । न च 'तस्य दोषः—' इति वार्तिके णग्रहणात् णत्वविषये अवश्यं स्थानिवद्भावेनैव भवितव्यमित्यभ्युपगन्तव्यमिति वाच्यम्, तथा सति व्यूढोरस्केनेत्यादौ अयोगवाहानामट्सु पाठेन अच्त्वात् विसर्गस्थानिकसकारव्यवधानेऽपि पञ्चमीसमासपक्षे 'अचः परस्मिन्—' इति स्थानिवद्भावावश्यंभावेन णत्वापत्तेः । यदि तत्रायोगवाहपाठस्य 'अनल्विधौ' इति निषेधसिद्धिफलकतया वार्तिककाराभिमतत्वेन तत्प्रामाण्यात् णत्वविधावपि अनित्यत्वात्तदप्रवृत्तिः; अन्यथा तादृ-

शफलकथनासंगत्यापत्तेरिति मन्यते; तदा वार्तिकात्पूर्वग्रहणयोर्ल-क्ष्यसिद्धौ तुल्यकक्ष्यतासूचकवक्ष्यमाणभाष्यप्रामाण्यादनित्यत्वं शक्य-माश्रयितुमित्युपशाम्यतु भवान् । 'कुमति च' इति णत्वं तु न वृत्रघ्न इत्यत्र शङ्क्यम्, संनिपातपरिभाषाविरोधप्रसक्त्या तत्र तेन णत्वाप्रवृत्तेरिति बोध्यम् । एवं च सूत्रकारमते वृत्रघ्न इत्यादौ शसाद्यन्ते नित्यणत्वाप्रवृत्त्या 'प्रातिपदिकान्त—' इति वैकल्पिकणत्वमेव सिद्धमित्यवगन्तव्यम् ॥

वार्तिककारमतेऽपि विकल्पस्यैव प्राप्तिः; न वा नित्यस्य, नापि निषेधस्य । तथा हि—इदममीभिर्वार्तिककारमतं प्रथममवधा-रयितव्यम्— 'रषाभ्यां णो नः—' इत्यत्र समानपदशब्देन समासरूपसमानपदस्यापि ग्रहणम् । 'पूर्वपदात्—' इत्यनेन पूर्वपदाच्चेत् संज्ञायामेवेति तस्य नियमात् रामनामेत्यादौ 'रषाभ्यां णो नः' इत्यनेन णत्वं न भवति । 'प्रकरणे प्रकरणमसिद्धं न योगे योगोऽसिद्धः' इत्यभ्युपगमेन णत्वप्रकरणे पूर्वयोगं प्रति परशास्त्रस्य 'पूर्वत्रासिद्धम्' इति असिद्धत्वं नास्तीति 'रषाभ्याम्' इत्यादि यावण्णत्वशास्त्रमडादिव्यतिरिक्तव्यवधाने न प्रवर्तत इति 'अट्कुपु—' इत्यनेन नियम्यते—इति । तथा च सति 'अट्कुप्वाङ्—' इति 'पूर्वपदात्—' इत्यनयोर्नियमविधित्वेन निवृत्तावेव तात्पर्यात् विधिनिषेधयोरुभयोरपि तात्पर्यकल्पने गौरवात् 'सकृदुच्चरितः शब्दो न वृत्तिद्वयमर्हति' इति न्यायात् सकृदुच्चरितेन शक्यलक्ष्ययोरुभयोरुपस्थापकत्वासंभवात् तथा सत्यावृत्तिप्रसङ्गाच्च विधिशास्त्रस्यासंकुचितप्रसरस्य नियमशास्त्रस्य विधिमुखेन प्रवृत्य-

भ्युपगमे निरर्थकसंकोचकल्पनाप्रसङ्गाच्च अडादिव्यवधाने संज्ञायां च 'रषाभ्याम्—' इत्यनेनैव णत्वं युक्तमित्यभ्युपगन्तव्यम् । अडादिव्यवधाने प्रातिस्विकप्रातिपदिकेत्यादिशास्त्रान्तरेणापीति विशेषः; तत्सूत्रस्य प्रकरणनियामकत्वात् । तथा च अडादिव्यतिरिक्तव्यवधाने न णत्वमिति पूर्वस्यार्थः; असंज्ञायां पूर्वपदस्थान्निमित्तात्परस्य नकारस्य न णत्वमित्युत्तरस्यार्थ इति सिद्धत्वेन तयोर्निषेधतुल्यकारिता सिद्धा भवति । अत एव 'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः' इति 'अट्कुपु—' इति सूत्रे प्रतिषेधवक्तव्यता वार्तिककृतोक्ता युक्ता । अन्यथा नियमविधित्वेनाभिमतस्य 'अट्कुपु—' इत्यस्य विधिमुखेन प्रवृत्त्यभ्युपगमे 'हन्तेर्हकारेणैव व्यवाये णत्वं वक्तव्यम्' इति 'ऊत्रुपधाग्रहणं कर्तव्यम्' इतिवत् 'कवर्गे हकारानादेशग्रहणं कर्तव्यम्' इति वा वार्तिकं निर्दिष्टं स्यात्, 'अट्कुपु—' इत्यनेन विधिमुखेन प्रवृत्तिमत्त्वरूपसारूप्ये संभवति तत्परित्यागानौचित्यात् । अत एव 'ङमो ह्रस्वात्—' इति सूत्रे ङमुटो नकाराद्यागमत्वे कुर्वन्नास्ते इत्यादौ 'रषाभ्याम्—' इत्यनेनैव णत्वमापादितं भाष्ये; न तु 'अट्कु—' इत्यनेन । 'अट्कुप्वाङ्—' इति सूत्रमडादिव्यवधाने अप्राप्तौ विधायकमिति तु एकदेशिमतम्; न तु सिद्धान्ते वार्तिकमतमिति स्पष्टमुक्तं शेखरे । एवं च सति 'हन्तेरत्पूर्वस्य' इत्यत्र अत्पूर्वग्रहणाभावेऽपि हन्तेरित्यनेन प्रकरणविषयनियामकाट्कुप्वाङिति-सूत्रसाचिव्येन प्रहण्यादित्यादौ णत्वप्रवृत्तिवत् प्रघ्नन्तीत्यादावपि तेन णत्वप्राप्तौ हन्तेरित्यनेन विहितं णत्वम् 'अट्कुपु—' इति सूत्रेण व्यवधाने प्रवर्तते चेत्, तर्हि हकारस्वाभाविकाकाररूपाङ्व्यवायतदन्यतरव्यवधान एव नान्यत्रेति भावितार्थकं सत् अत्पूर्व-

ग्रहणम् 'अट्कुप्वाङ्—' इत्यस्य नियामकं संपद्यते। अत एवा-तिदुर्बोधोपदर्शितैतादृशगूढाभिसंधिं बालानामवबुबोधयिषुभिरेव वार्तिककारैः 'अट्कुपु—' इति सूत्रानन्तरम् 'कुब्यवाये—' इति वार्तिकं पठितम्। भाष्यकाराश्च 'कुब्यवाये हादेशेषु प्रतिषेधो वक्तव्यः' इति वार्तिकमुपादाय 'सूत्रारम्भं नैकं प्रयोजयति' इति न्यायेन आनुषङ्गिकफलद्वयमपि मुख्यफलेन साकं वार्तिककाराभिप्रेतं क्रमादुदाहरणत्रयेण सूचयितुं स्रुघ्नो वृत्रघ्नः प्राघानीत्युदाहृत्य 'हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणमपि न कर्तव्यं भवति' इत्यनेन अत्पूर्वग्रहणगूढार्थावबुबोधयिषायामेव मुख्यतात्पर्यं वार्तिककारस्य स्फुटतरं प्रकटीकृतवन्तः। एवं च सति इदं वार्तिकं पूर्वोक्तगूढाभिसंधिबोधकमेव; न तु अत्पूर्वग्रहणप्रत्याख्यानपरमिति भाष्यस्वारस्याल्लभ्यते। अन्यथा प्रयोजनं विना गुरुतरवचनेन सूत्रकारकृतपूर्वसूत्रैकदेशलघुतरैकपदप्रत्याख्यानस्यायुक्तत्वेन भाष्यकारस्य तदभ्युपगमानौचित्यापत्तेः। 'अगारैकदेशे प्रघणः प्रघाणश्च' इति सूत्रस्य अत्र अत्पूर्वग्रहणसत्त्वे वृद्धिविकल्प एव तात्पर्यम्, तथा कल्पनाया एव लाघवात्। तत्प्रत्याख्याने तु णत्ववृद्धिविकल्पयोरुभयोरपि निपातनस्य तात्पर्यकल्पनापत्त्या गौरवाच्च। अत एव अन्यत्र तत्र तत्र वचनेन वचनप्रत्याख्यानमसति विशेषे न युक्तमित्युक्तत्वात् अस्य च सुज्ञानत्वात् उपदर्शितगौरवाच्च नेदं प्रत्याख्यानपरमिति सुबोधमेवेति तात्पर्येण भाष्यकृता, अत्र अवशिष्टात्पूर्वग्रहणं कर्तव्यम्, उत वार्तिकम्। किं ज्याय इत्येवमन्यत्रेव न प्रवर्तितम्। अत्पूर्वग्रहणस्य 'अट्कु—' इति सूत्रनियामकत्वरूपगूढार्थावबोधनस्यैव वार्तिककाराभिप्रेतत्वेन तावन्मात्रार्थकत्वे 'हन्तेरत्पूर्वस्य'

इत्यनन्तरं पठनीयस्य 'कुप्यवाये हादेशेषु—' इत्यस्य 'अट्कुप्वा—' इत्यनन्तरं पठनात् वार्तिककारेण मध्येऽपवादन्यायेन रषाभ्यामि- त्यस्य बाधसिद्धिरूपप्रयोजनान्तरमप्यभिप्रेतमिति स्रुघ्नो वृत्रघ्न इत्यु- दाहृत्य वक्ष्यमाणरीत्या स्रुघ्नो वृत्रघ्न इत्यादौ णत्वाप्रवृत्तेरुक्तपाठ- प्रयोजनं मन्दमित्यभिप्रायेण अत्पूर्वग्रहणवार्तिकयोराद्यस्यार्थमवबो- धयितुं पूर्वोपवर्णितात्पूर्वग्रहणतादृशार्थबाधकप्रयोजनत्वमेव वार्ति- कस्य युक्तमिति व्यक्तीकर्तुं च 'हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्तव्यं भवति' इत्युक्त्वा ततः किमप्यवदता भगवता अवहेलन- मभिप्रेतमवगम्यते। प्रयोजनान्तरस्य त्वदभिमतस्य 'रषाभ्याम्—' इति बाधस्य अनावश्यकतया किमर्थं गुरुतरवचनम्। स्ववचने सति अत्पूर्वग्रहणं न कर्तव्यं भवति वा, न भवतीत्यर्थः। भवतीत्यत्र काकुस्वरो बोध्यः। तथा च प्रयोजनाविशेषात् [illegible] यथान्यास- मेव युक्तमिति परिशीलनशालिनां हृदयमधिरोहतीति दिक्॥

किं च वार्तिककारमतरीत्यापि न उक्तवार्तिकं मध्येऽपवाद- न्यायेन रषाभ्यामित्यस्य बाधकम्। किं तु अत्पूर्वग्रहणसमानफलक- त्वेन हन्तेरित्यस्यैव बाधकं तदिति सिद्धं भवति। तथा च प्रागुक्त- युक्तेरेव 'एकाजुत्तरपदे णः' 'कुमति च' इत्यनयोरप्राप्त्या वार्ति- कमतेऽपि शसाद्यन्ते वृत्रघ्न इत्यादौ 'प्रातिपदिकान्त—' इति णत्वमेवेति सिद्धं भवति॥

अथ स्रुघ्न इत्यत्र 'रषाभ्याम्—' इत्यस्य प्रवृत्त्या मध्येऽ- पवादन्यायेन 'कुप्यवाये' इति वार्तिकेन तन्निषेधोऽस्तु। केवल- यौगिकत्वेन संज्ञात्वाभावात् असंज्ञायां 'रषाभ्याम्—' इत्यप्रवृ-

तेर्वृत्रघ्न इति भाष्योदाहरणानुपपत्तिरिति न वाच्यम्, वार्तिककारमते 'अट्कुपु--' इति 'पूर्वपदात्--' इत्यनयोर्नियमविधित्वेन निषेधमुखेन प्रवृत्तेरुपवर्णितत्वेन तयोरपि निषेधकत्वाविशेषेऽपि समुदायनिष्ठसंज्ञात्वाभावसापेक्षपूर्वपदादिति निषेधापेक्षया अन्तरङ्गत्वात् प्रायानीत्याद्यर्थत्वेऽपि संभवत्फलसंग्रहौचित्याच्च प्रतिपदोक्तत्वाच्च वाच्यवृत्त्या निषेधकत्वाच्च 'कुव्यवाये हानादेशः' इति वक्तव्ये 'प्रतिषेधो वक्तव्यः' इति वार्तिकस्वारस्येन इतरनिषेधसूत्रप्रवृत्तेः पूर्वमेव स्ववचननिषेधान्तरोभयप्रवृत्तियोग्यस्थले वार्तिककृता स्ववार्तिकप्रवर्तनमेवाभिप्रेतमित्यवगमाच्च भाष्यकृता तत्तात्पर्यसूचनार्थं वृत्रघ्न इत्युदाहरणदानेनादोषात् ॥

अत्रेदं बोध्यम्—वार्तिककृता 'कुव्यवाये—' इत्यस्य वार्तिकस्य प्रयोजनत्रयमभिसंहितम्—स्थानस्वारस्येन 'रषाभ्याम्—' इत्यस्य स्रुघ्न इत्यादावप्रवर्तनम्, प्रतिषेधस्वारस्येन वृत्रघ्न इत्यादौ 'पूर्वपदात्—' इत्यतः पूर्वमेव वार्तिकेन तस्य निषेधः, अत्यन्तस्वारस्येन अत्पूर्वग्रहणफलसंग्रहः । तत्र पूर्वप्रयोजनद्वयमयुक्तम्; सूत्रमत इव स्रुघ्नशब्दस्यान्यथासिद्धत्वात्, वृत्रघ्न इत्यादौ 'पूर्वपदात्—' इत्यनेनापीष्टसिद्धेः, ततः पूर्वं प्रवृत्त्यर्थं प्रतिषेधारम्भस्य निरर्थकत्वादिति परिशेषात् तृतीयं प्रयोजनं स्फारयितुम् 'अत्पूर्वग्रहणं न कर्तव्यं भवति' इत्युक्त्वा, वार्तिकं न प्रत्याख्यानपरं गौरवादिति सुबोधमिति तत्तन्न्याय्यताविचारो भाष्यकृता न कृतः । इत्थं भाष्यतात्पर्यं च प्रागुक्तरीत्या प्रयोजनत्रयमुदाहरणत्रयेण प्रदर्श्य प्राक्तनद्वयमुपेक्ष्य तृतीयोपपादनेन तद्भाष्यस्वारस्यादेवावगम्यते ॥

अत्र च भाष्योदाहरणे वृत्रं हन्ति हनिष्यति वा वृत्रघ्न इति मूलविभुजादित्वात् कप्रत्ययान्तः स्रुघ्नशब्दसाहचर्यात् प्रथमान्तः, न तु शसन्त इति बोध्यम् । वृत्रघ्न इति प्रतीकमुपादाय 'प्रातिपदिकान्तेति प्राप्तिः' इति कैयटस्यायमाशयः—कप्रत्ययान्तवृत्रघ्नशब्दे यद्यप्यनेन णत्वं निषिद्धम् । 'प्रातिपदिकान्त—' इति सूत्रेण शसाद्यन्तवृत्रघ्नइत्यादिस्त्वविषये वैकल्पिकस्य णत्वस्य प्राप्तिरस्त्येव—इति । एवं च वृत्रघ्न इति भाष्योदाहरणे 'प्रातिपदिकान्त—' इति णत्वप्राप्तेरेव वक्तव्यतया तद्वार्तिकस्य 'रषाभ्याम्—' 'हन्तेः—' इत्येतन्मात्रबाधकतेत्युक्तिर्न युक्तिमतीति शङ्काया नावसरलाभः; तथा सति मध्येऽपवादन्यायस्य बाधापत्तेश्च, त्वन्मते तादृशन्यायान्तरसाचिव्यालाभाच्च, तद्बाधां विनैव भाष्योदाहरणसांगत्यस्योपवर्णितत्वाच्च, नित्यविधिनिषेधकत्वे न्यायतो लब्धे सति विकल्पविधिनिषेधकत्वायोगाच्च, वार्तिककृता 'प्रकरणे प्रकरणमसिद्धम्' इत्याश्रयणादसिद्धत्वाभावेन परस्ताद्विकल्पप्राप्तेरेवोचितत्वाच्च, अन्यथा 'नित्यं समासेऽनुत्तरपदस्थस्य' इति सूत्रे भाष्ये 'अनुत्तरपदस्थस्य इति किम्? इह माभूत्—परमसर्पिःकुण्डिका । इह नित्येन मुक्ते 'इसुसोः सामर्थ्ये' इति विभाषा कस्मान्न भवति' इत्याशङ्क्य, सामर्थ्यभेदप्रयुक्तोपाधिभेदाश्रयणेन परिहृतम्; तत्र त्वद्रीत्या नित्यविकल्पयोरपि निषेधकत्वे 'इसुसोः सामर्थ्ये' इति विकल्पाशङ्काया अनुचितत्वापत्त्या तद्भाष्यविरोधापत्तेश्च ॥

अत्रेदमवधेयम्—तत्र 'अनन्तरस्य—' इति न्यायेन 'नित्यं समासे—' इत्यस्य तत् बाधकम् । अत्र तु मध्येऽपवाद-

न्यायेन 'रषाभ्याम्—' इत्यस्य बाधकं 'कुव्यवाये—' इति वार्तिकमिति तुल्यम् । 'क्ङिति च' इति सूत्रे कैयटेन विधिनिषेधशास्त्रयोरेकवाक्यतायाः प्रदर्शितत्वात् नित्यविध्येकवाक्यता उभयत्र समाना । तत्र विकल्पस्य प्रवृत्तौ निषेधस्य वैयर्थ्यम्; अथापि शास्त्रस्य स्वविषये प्रवृत्त्यवश्यंभावेन भाव्यमित्यभिप्रेत्य वैयर्थ्यमनालोच्यैव विकल्प आशङ्कितः । अत्र तु 'रषाभ्याम्—' इत्यस्य निषेध्यस्य सद्भावात् न वैयर्थ्यगन्ध इति विशेष एव । किं च तत्र पूर्वत्वेऽपि विकल्प आशङ्कितः । अत्र तु 'विप्रतिषेधे परम्—' इति सूत्रबोधितप्रवृत्तिकेन परेणेति महानेव विशेषः स्फुटतर इत्येवं स्थिते कथंकारं नाम विकल्पमप्येतद्वार्तिकं प्रतिरुन्ध्यादिति विभावयतु भवान् ॥

किंच स्वृत्वा सूत्वा इत्यादौ निषेधात्परत्वात् 'स्वरतिसूति—' इति वैकल्पिकमिडागममाशङ्क्य 'श्र्युकः किति' इति निषेधस्य पुरस्तादपवादन्यायेन नित्येडागममात्रविषयकत्वमभिप्रेत्य पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्येन 'श्र्युकः किति' इति निषेधो विकल्पविषयेऽप्याश्रीयते; तद्वदत्र पूर्वप्रतिषेधाद्यभावात् तदाश्रयणे दृढतरप्रमाणानुपलम्भाच्च परत्वाद्विकल्पप्राप्तेः प्रतिबन्धकं न किंचिदुपलभामहे । तथा च भाष्योदाहृते शसन्तत्वस्य दुरुपपादत्वात् कप्रत्ययान्तत्वमित्यवशेनाप्यभ्युपगन्तव्यमिति सिद्धम् ॥

अथ 'अट्कुप्वाङ्—' इति सूत्रं प्रकरणनियामकम्; तत्सूत्रपठितवार्तिकं तु तत्सूत्रपाठस्वारस्यात् 'रषाभ्याम्—' इत्यस्य, अत्पूर्वग्रहणतुल्यार्थकतासूचकभाष्यस्वारस्यात् 'हन्तेः—' इत्य-

स्यापि बाधकं नान्यस्येत्यायातत्वात् तत्सूत्रवार्तिकयोर्वैरूप्यं स्यादिति चेत्, न; 'अट्कुपु—' 'पूर्वपदात्—' इत्यनयोर्वार्तिकमते नियामकत्वाविशेषेऽपि पूर्वस्य प्रकरणाविषयकत्वम्, उत्तरस्य तु 'रषाभ्याम्—' इत्येतन्मात्रविषयकत्वं लक्ष्यानुरोधादित्यभ्युपगन्तव्यत्वेन तत्र प्रामाणिकवैरूप्याभ्युपगमवत् अत्पूर्वग्रहणतुल्यफलकतासूचकप्रागुक्तभाष्यस्वारस्यादेतादृशवैरूप्यस्याङ्गीकर्तव्यत्वादित्यकिंचित्करमेतत् ॥

यत्तु एतद्वार्तिकस्य प्रकरणविषयत्वमित्याभिप्रायेण पूर्वोदाहृतभाष्यसूचितसूत्रवार्तिकसमफलकतासिद्धये कौमुदीकारैर्योगविभागः प्रदर्शितः । यच्च व्याख्यातृभिः 'वार्तिकार्थं योगविभागेन संगृह्य व्याचष्टे' इत्यवतारितम्; तदुभयमपि अयुक्तमेव; योगविभागस्य भाष्ये अनुपलम्भात्, हन्तेरत्पूर्वस्येत्यत्र अत्पूर्वग्रहणं न कर्तव्यं भवतीति भाष्ये हन्तेरत्पूर्वस्येति संपूर्णसूत्रोपादानस्वारस्यादेकसूत्रत्व एव तात्पर्यावगमात्, अत एव योगविभागस्यानभिमतत्वसूचनाच्च, योगविभागस्याभिमतत्वे लाघवात् अत्पूर्वग्रहणं न कर्तव्यं भवतीति निर्देशस्यैवौचित्याच्च, किं च योगविभागेन 'अत्पूर्वस्य' इत्यस्य नियामकत्वाङ्गीकारे तत्र उपसर्गग्रहणानुवृत्त्ययोगेन तथा सति 'एकाजुत्तर—' इत्यादिनियमासंभवेन मध्ये विच्छेदकल्पनापत्तेश्च, उत्तरत्र मण्डूकप्लुत्याश्रयणापत्तेश्च, तद्विनैव सिद्धौ तदाश्रयणस्यायुक्तत्वाच्च, प्रागेव स्थानिवद्भावाप्रवृत्तेरुपपादितत्वेन 'एकाजुत्तरपदे' इत्यस्य संनिपातपरिभाषया 'कुमति च' इत्यस्य च प्राप्तेरेवाभावेन तन्निवृत्त्यर्थम् 'योगविभागसामर्थ्यात् एकाजुत्तरपद

इति णत्वमपि निवर्त्यते ' इत्युक्तेर्युक्तिविहीनत्वाच्च, ' एकाजुत्तर-' इत्यस्यापि नियामकत्वाङ्गीकारे बहुवृत्रहाणि इति वार्तिकानुमतनित्यणत्वाप्रवृत्तिप्रसङ्गाच्च । अत एव योगविभागेन वार्तिकार्थसंग्रहाशापि गलहस्तितेति बोध्यम् ॥

यत्तु ' अत्पूर्वग्रहणं हस्थानिककर्णाभावबद्धन्तेरुपलक्षणम् । तेन बहुवृत्रहाणीत्यत्र न दोषः ' इति शेखरकारः, तन्न; अत्पूर्वत्वस्य प्रकृते विद्यमानत्वेन ' अविद्यमानत्वे सति व्यावर्तकत्वमुपलक्षणत्वम् ' इति लक्षणलक्षितोपलक्षणत्वस्यायोगात् । प्रकृतग्रन्थे उपलक्षणत्वं च लक्षणयोपस्थापकत्वमित्यपि न वक्तव्यम्, लक्षणाकल्पनाबीजभूतार्थानुपपत्तितात्पर्यानुपपत्त्यन्यतरासंभवेन लक्षणाया असंभवात्, किं च ' उभे अभ्यस्तम् ' इत्यत्रापि उभेग्रहणं समुदायोपलक्षणमित्यभिप्रेत्य प्रवृत्तम् उभेग्रहणं समुदायलाभार्थमिति मतम् अशब्दार्थत्वादिति हेतुना स्वेनैव निराकृतत्वेन आकरानुपलब्धलक्षणाया अनभ्युपगन्तव्यत्वाच्च, अत एव स्वोत्तरग्रन्थविरोधापत्तेश्च, किं च आद्यन्तशब्दयोर्लक्ष्यसिद्ध्यनुपयुक्तार्थोपलक्षणत्वस्याङ्गीकारेण सिद्धे ' अपूर्वानुत्तरलक्षणत्वात् ' इति वार्तिकायुक्तत्वोपपादनपराद्यन्तवत्सूत्रावश्यकतास्थापकभाष्यतात्पर्यविरोधापत्तेश्च । अपि च अत्पूर्वग्रहणस्य हन्त्युपलक्षणत्वस्यैव स्वाभिमतत्वेन शब्दतोऽवगमात् बाधां विना स्वार्थस्य त्यागायोगेन तत्प्रकरणविरोधेन जहल्लक्षणाया अयोगात् तदानीम् ' हन्तेरपूर्वस्य ' इति निर्देष्टमुचिततत्वेन वस्तुतः ' हन्तेरघः ' इति वचनव्यक्तेरुचितत्वेन तथा निर्देशाकरणेन अजहल्लक्षणाया एव वक्तव्यत्वात् ' अत्पूर्वस्य ' इत्यत्र

पञ्चमीतत्पुरुषाश्रयणे प्रघ्नन्तीत्यादौ धातोरकारात्पूर्वत्वेन बहुव्रीहित्वे त्वन्मते प्रघ्नि वृत्रघ्नीत्यादौ धातोरकारात्परत्वेन णत्वापत्तेः। तथा च अत्पूर्वत्वकवर्गरहितत्वोभयविशिष्टस्यैव णत्वमिति स्वीकारादुदाहृतस्थले कवर्गरहितत्वाभावान्न णत्वमिति कल्पना तु न निस्तारावधिका: तथा सति बहुवृत्रहाणीत्यादौ कवर्गराहित्ये सत्यपि अत्पूर्वत्वविरहेण णत्वस्यानिष्टत्वापत्त्या 'बहुवृत्रहाणीत्यत्र न दोषः' इत्युक्तेरयुक्तत्वध्रौव्यात्, अन्यतरविशेषणसत्त्वेऽपि प्रवृत्तौ तु समासद्वयेऽपि दोषापत्तेरुक्तत्वात्। हकारोपलक्षणत्वेऽपि अजहल्लक्षणावश्यकतास्थापनेन बहुवृत्रहाणीत्यत्र दोषस्तदवस्थ एवेति तादृशदोषाभावकथनमवधानवैधुर्यनिबन्धनमेवेति सुधीभिर्विभावनीयम् ॥

एवं च बहुवृत्रहाणीत्यादिलक्ष्यासिद्धेरुपलक्षणत्वेऽपि दुरुद्धरत्वात्, तपरकरणविरोधेन जहल्लक्षणाया अयुक्तत्वात्, 'हन्तेरवः' इति सूत्रकृदसूत्रितत्वात्, उक्तदोषाप्रवृत्तये लाघवात् 'छत्वममि' इतिवत् 'हन्तेरघः' इति वार्तिककृता वक्तव्ये तथा अनुक्तेः, भाष्यकृता 'अत्पूर्वस्य' इति न कर्तव्यं भवतीति वक्तव्ये 'हन्तेरत्पूर्वस्य' इत्यत्रेति संपूर्णसूत्रप्रयोगाच्च सूत्रकाराद्यनभिमतो योगविभागो हेयहेयः ॥

किं च अव्यभिचारात् हस्थानिकेति विशेषणमुपलक्षणत्ववादिनोक्तं निष्फलमेव, कवर्गविशेषाकाङ्क्षाशान्त्यै वार्तिके 'हादेशेषु' इत्यस्यावश्यकत्वेऽपि उपलक्षणत्वे तदनावश्यकत्वात्, हन्तेरित्यनुवृत्तेरेव तत्सिद्धेः।

यदपि 'एकाजुत्तरपद इति णत्वमपि' इति प्रतीकमुपादाय

'अपिना प्रातिपदिकान्तेत्यस्य कुमति चेत्यस्य च संग्रहः। बाध्य-सामान्यचिन्ताश्रयणात्सर्वबाधः' इत्युक्तं शेखरकृता; तदपि न युक्तम्; मुनित्रयानुमतेर्वक्तुमशक्यत्वस्योपदर्शितत्वात् योगविभागा-योगात् उपलक्षणत्ववर्णनकथाया निर्धूतत्वात्, उपलक्षणत्वेऽपि तत्प्रकरणविरोधेन बहुवृत्रहाणीत्याद्यसिद्धेरुपपादितत्वाच्च, योगवि-भागासंभवेन 'प्रातिपदिकान्त—' इति णत्वनियामकत्वासंभवेन तत्संग्रहायोगात् प्रागुक्तरीत्या 'कुमति च' इत्यस्य विभक्तिविषये अप्रवृत्त्या तत्संग्रहकथनवैयर्थ्याच्च, अपिना प्रातिपदिकान्तेति संग्रहस्य मूलकृदभिमतत्वेन वक्तुमयुक्तत्वाच्च, तथा सति 'प्रातिपदि-कान्तेति णत्वमपि निवर्त्यते' इति तद्वाक्यप्रसङ्गात् वस्तुत आवश्य-कत्वात्प्राथमिकत्वाच्च, शब्दप्रयोगस्य स्वाधीनत्वेन प्रातिपदिकान्ते-त्येव मूलकृता वक्तव्यत्वेन तदनुक्तौ बीजाभावात् त्वदुक्तरीत्या मूलकृतः स्वाभिप्रायसूचनाय स्वाधीनशब्दप्रयोक्तृताविरहेण प्रौढि-हान्यापत्तेश्च, 'अनन्तरस्य—' इति न्यायबाधेन एकान्तरितबाध-स्यैव तदभिप्रेतत्वसूचनाच्च, वचनप्रामाण्यादेकवर्णव्यवधान एव येन नाव्यवधानन्यायेन कार्यप्रवृत्तिदर्शनेन तत्साम्यादेकान्तरितबाधस्यैव तत्स्वारस्यानुरोधेन युक्तत्वाच्च। तस्मात् अपिना प्रातिपदिकान्ते-त्यस्य संग्रह इत्ययुक्तमयुक्तमयुक्तमेव॥

अत एव बाध्यसामान्यचिन्ताश्रयणमपि मूलस्वरसविरुद्धं ध्येयम्, 'अनन्तरस्य—' इति न्यायबाधस्यैव योगविभागसामर्थ्य-लब्धत्वकथनात्, प्रकृतावुपाकरणादिपशुसंस्काराणामव्यवहितोत्तर-क्षणक्रमवत्त्वेऽपि 'सप्तदश प्राजापत्यान् पशूनालभते' इति विकृतौ

सहश्रुत्या उपाकरणादिसंस्काराणां षोडशक्षणमात्रव्यवधानसहनेऽपि न ततोऽधिकविलम्बसहनं, प्रकृतिप्राप्तक्रमानन्तर्यस्य तावन्मात्रेण सहश्रुतेश्चारितार्थ्यादिति पूर्वतन्त्रे क्रमलक्षणे सिद्धान्तितत्वेन तत्तुल्यन्यायतया अत्रापि योगविभागस्य एकान्तरितबाधेन चरितार्थत्वेन 'एकाजुत्तरपदे णः' इत्यस्यैव बाधे मूलकृत्तात्पर्यस्य युक्तत्वात् । अत एव मूलकृता 'एकाजुत्तरपदे—' इत्येव उपात्तम्, नतु 'प्रातिपदिकान्त—' इति । तथा च प्रदर्शितमूलशब्दस्वारस्यपरिशीलनदशायामभ्युपगतेऽपि योगविभागे 'प्रातिपदिकान्त—' इति णत्वबाधोऽन्याय्य इति स्वाभिप्रायं परमरहस्यत्वेन सूचयति स्म मूलकार इति विभावनीयं कुशाग्रबुद्धिभिः ।

नन्वेवं सति 'यत्तु वृत्रघ्नो वृत्रघ्ण इति वैकल्पिकं णत्वं माधवेनोक्तम्, तद्भाष्यवार्तिकविरुद्धम्,' इति स्वोत्तरग्रन्थो विरुध्येतेति चेत्, किं कुर्मो वयम्; उत्तरग्रन्थानुसरणे शब्दस्वारस्यविरोधादिबहुदोषप्रसङ्गात् । तस्मात्स एव स्वाभिप्रायो द्रष्टव्य इत्यलमसदावेशेन । एवं च वार्तिकमतेऽपि वैकल्पिकं णत्वं निर्बाधमेवेति सिद्धम् ॥

अथैवमपि भाष्यकारमतमाश्रित्यैव लक्ष्यं लक्षणैकचक्षुष्कैरास्थेयम्, यथोत्तरं मुनीनां प्रामाण्यात् । तथा च भाष्यकारैः प्रकरणेऽपि प्रतियोगमसिद्धत्वाभ्युपगमात् प्रथममेव वृत्रघ्न इत्यादौ 'रषाभ्याम्—' इत्येव णत्वं प्राप्नोति । नन्वखण्डपदत्वाभावान्न तेन णत्वं संभवतीति प्रागुक्तमिति चेत्, तदयुक्तम्; 'गतिकारकोपपदानाम्—' इति समासे उत्तरखण्डस्य पदत्वविरहेण अखण्डपदत्वानपायादिति चेत्, मैवम्; निमित्तावटितप्रकृत्यघटकत्वस्यैव समानपद-

स्थत्वेन प्रकृते च वृत्रशब्दघटकरेफरूपनिमित्तघटितक्विप्प्रत्ययप्रकृतिभूतहन्शब्दघटकत्वेनाखण्डपदस्थत्वाभावात् ॥

नन्वेवमपि 'व्यवायेऽपि' इति योगविभागेन विधित्वाङ्गीकारेण तत्र समानपदग्रहणानुवृत्तेरयोगेन णत्वं दुर्वारमिति चेत्, न; 'व्यवायेऽपि' इत्यस्य सर्वणत्वविधीनां व्यवधाने अप्रवृत्तौ 'तस्मादित्युत्तरस्य' इति बाधित्वा व्यवधानेऽपि प्रवृत्त्यभ्यनुज्ञापकत्वेन तादृशपरिभाषाबाधेन चरितार्थत्वाण्णत्वविधावपि व्यापारकल्पने गौरवात्, अपिशब्दवैयर्थ्यप्रसङ्गाच्च, तथा सति रामनामेत्यत्र णत्वापत्तेश्च, पूर्वसूत्रे समानपदवैयर्थ्यापत्तेश्च, एतद्दोषपरिहाराय अत्रापि समानपद इत्यनुवर्त्य उत्तरसूत्रे अट्कुप्वाङित्यादिव्यवायइत्यन्तानुवृत्तिकल्पने गौरवादपिशब्दवैयर्थ्यतादवस्थ्याच्चेति दिक् ॥

अथ यद्यपि यौगिकत्वेन 'पूर्वपदात्—' इत्यस्य पूर्वोक्तयुक्त्या 'एकाजुत्तरपदे णः' इत्यस्य च न प्राप्तिः; तथापि 'कुमति च' इति तु स्यादेव, त्रिपाद्या असिद्धत्वेन तत्र तदप्रवृत्त्या पूर्वोक्तसंनिपातपरिभाषाविरोधासंभवादिति न वाच्यम्, उपजीव्यविरोधन्यायमूलकत्वेन तादृशपरिभाषाया लौकिकत्वात् त्रिपाद्यामपि प्रवृत्तेः शेखरशब्दरत्नयोरुक्तत्वात् । न चैवं प्रघ्नन्तीत्यादावपि तत्परिभाषाविरोधादेव णत्वाप्रवृत्तेरत्पूर्वग्रहणवैयर्थ्यमिति वाच्यम्, 'अट्कुप्वाङ्—' इत्यस्यैव 'हन्तेः' इत्यस्य प्रवृत्तौ हकारघकारयोरविशेषात् तत्परिभाषाया अप्रवृत्तेः, प्राघानीत्यादिव्यावृत्त्यर्थमत्पूर्वग्रहणस्यावश्यकत्वाच्च ॥

न चैवं नित्यणत्वप्राप्तेरयोगे 'कुव्यवाये—' इति वार्तिकेन

सामर्थ्याद्विकल्पस्य निषेधः प्राप्नोति । न हि भाष्यमते णत्वान्तः निषेद्धुं शक्यते । अत एव वृत्रघ्न इत्युदाहृतमिति वाच्यम् येननाव्यवधानन्यायेन वचनप्रामाण्याद्सिद्धत्वाभावस्य भाष्यकृता भ्युपगतत्वेन 'हन्तेः' इत्यस्य सिद्धत्वेऽपि 'प्रातिपदिकान्त— इत्यस्यासिद्धत्वाद्वार्तिकेन निषेद्धुमशक्यत्वात्, अत्पूर्वग्रहणतुल्यफल तायाः असंभवेन तन्मते तद्भाष्यविरोधापत्तेश्च, योगविभागेन तत्तुल्य फलतासंपादनाशायाः अधस्तादेव विघटितत्वाच्च, वृत्रघ्नशब्दस्य कप्रत्ययान्तत्वेन तदुदाहरणासंगत्यापादनायोगाच्च, तस्य च वार्तिक कारमतानुसारेण उदाहृतत्वस्य प्रागेव प्रपञ्चितत्वाच्च । अत एव वार्तिककाराभिसंहितप्रयोजनत्रये एकस्यैव भाष्यकारकटाक्षविषय त्वमिति प्राक् प्रपञ्चितत्वात्, अत एव तत्सूत्रानन्तरं तद्वार्तिकपाठ फलपर्यनुयोगे नातीवाभिनिवेष्टव्यमिति सूचितत्वात्, स्वरूपकृतला घवात्, प्रघणप्रघाणशब्दयोर्वृद्धिविकल्पमात्रतात्पर्यकल्पनारूपप्रयो जनलाघवात्, अतिसंनिहितत्वेन अर्थज्ञानक्लेशविरहात्, अन्यथा एतादृशगौरवस्य स्फुटतरत्वात्, सूत्रकृदुपदिष्टपूर्वत्वाच्च स्वयमेव कुशला युक्तं जानन्तीति तात्पर्येण भगवता भाष्यकृता व्यक्तमनुक्तत्वे- ऽपि अत्पूर्वग्रहणमेव कटाक्षपात्रीकृतमिति रहस्यमिति परिशीलिता पद्धतिः ॥

अथैवं प्रघनाघन इत्यत्र णत्वापत्तिः । घनाघनशब्दस्य रूढत्वेन तद्घटकधात्वर्थान्वयित्वायोगेन उपसर्गसंज्ञाविरहादत्र णत्व वारणेऽपि सुघ्नद्रुघ्नशत्रुघ्नादिशब्देषु 'पूर्वपदात्—' इति णत्वापत्ति र्दुर्वारैवेति चेत्, मैवम्; तेषां क्षुभ्नादिषु पाठेनादोषात्, 'येषां णत्वं

ष्टं ते क्षुभ्नादिषु बोध्याः । निषेधसूत्राण्यपि एतस्यैव प्रपञ्चाः' इत्ये-
सूत्रे कैयटेनैवोक्तत्वात् । अत एव भाष्यकृता लक्ष्यासिद्धौ वार्तिका-
र्वग्रहणयोस्तुल्यकारितोक्ता संगच्छते । तथा च भगवतो भाष्य-
ारस्य मतेऽपि शसाद्यन्ते वृत्रघ्न इत्यादौ 'प्रातिपदिकान्त—' इति
कल्पिकणत्वप्राप्तेरेव निर्बाधत्वेन माधवोदाहृतस्य वृत्रघ्नो वृत्रघ्णा
ते रूपद्वयस्यैव सूत्रवार्तिकभाष्यानुगृहीतत्वेन माधवमतमेव महद्-
हृदयंगममिति सिद्धम् ॥

श्रीचक्रवर्तिकवितार्किकसिंहलक्ष्मी-
वेदान्तदेशिकपदेन कृतं सुवर्णैः ।
श्रीमाधवाभरणमर्पितमद्भुतं श्री-
लक्ष्मीपतेर्हृदि चिराय जयाय भूयात् ॥

